UGC JOURNAL NO.-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४२ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०१७ ई०





प्रकाशन-स्थलम्
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नवदेहली-११००१६

UGC JOURNAL NO.-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया
त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४२ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०१७ ई०

प्रधानसम्पादकः
**प्रो० रमेशकुमारपाण्डेयः**
कुलपतिः

सम्पादकः
**डॉ० शिवशङ्करमिश्रः**

सहसम्पादकः
**डॉ० ज्ञानधरपाठकः**



प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

प्रकाशकः

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानित-विश्वविद्यालयः)

कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-११००१६



ISSN :- 0974 - 8946

४२ वर्षे तृतीयोऽङ्कः (जुलाईमासाङ्कः) २०१७ ई०



मुद्रकः - **अमरप्रिंटिंगप्रैसः**, दिल्ली

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

- एषा त्रैमासिकी शोध-पत्रिका।
- अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशितशोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्णं दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- अस्याः वार्षिकसदस्यताराशिः रु. १५०.०० पञ्चवार्षिकसदस्यताराशिः रु.७००.००, आजीवन-सदस्यताराशिः रु. १५००.००।। सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।
- पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

**यः सर्वपरिकल्पानामाभासेप्यनवस्थितः।**
**तर्कागमानुमानेन बहुधा परिकल्पितः॥**

वाक्यमिदमभियुक्तानां बहुश उपलभ्यते। तात्पर्यमिदं यत् प्रत्यक्चैतन्यरूपात्मा सर्वेषां रूपादिविषयकल्पानामाभासे अधिष्ठानतया सामान्यरूपेण विशेषरूपेण वा गोचरोऽपि विशेषरूपेण प्रकारतया अगोचर एव भवति। तस्यैव अवगमः तर्कागमानुमानेनाचार्याः यथायथं स्वकीयं प्रातिभं समासाद्य यथाभानमुपकल्पयन्ति। अत्र लिङ्गेन यत्साध्यते तदनुमानं, यच्च लिङ्गं विना केवलं दृष्टान्तेन साध्यते तत् स्वमुत्प्रेक्षारूपं यत् प्रतिभासमानं वस्तु तत् तर्कपदेनाभिहितं भवति। यथा **''आत्मा सूर्यसहस्रप्रकाश इव विद्युत्विद्योतनमित्यादि''** अत्र प्रत्यक्षोपजीव्यानुमानस्याभावात् केवलं तर्क एव प्रतिभाति। परपुरुषाद्-गुर्वादिभ्यः श्रवणमागमः। एतैः सर्वैः आत्मा रूपादिविषयाकारैः परकल्पितः विकल्पगोचरीक्रियते। यद्यप्येतदुपपत्त्यर्थमेव अङ्गीकृतं विवेचकैस्तथापि एष उपपत्तिप्रकारः नहि अन्यथात्वं केनापि प्रतिष्ठापितमपितु अनेनैव स्वकीयमभिलषितं स्थानं यथावासनं सर्वैरपि सिद्धैरधिसात्कृतम्। तथैवाद्यत्वे बहुषु पुस्तकेषु यथासिद्धान्तमुपपादितं वस्तु-सदपि, गवेषकैः विचारोत्कर्षेषु पारेगत्वा विलक्षणमार्जवासाद्य सुकुमारमतीनां ससौविध्यं प्रापयितुमात्मनः सार्थक्यमुपपाद्यते। इदमेवाध्ययनकर्म तेषां सुधीजनानुग्रहेण नैकान् जनान् सफलतासु प्रयोजयति। तत्रैव तेषां समेषां निकषपरिश्रमोद्भूतं नवनीतास्पदमसन्दिग्धं प्रवृत्तिप्रयोजकं ज्ञानमहमहमिकया प्रस्फुरत् सर्वजनेभ्य उपलभ्येदेतां धियमुद्दिश्य विद्यापीठमेतत् पत्रिकाप्रकाशनं कर्म किमपि अपूर्व पुण्यं कर्मेति मत्वा महता समारम्भेणात्मानं तत्र पारयति। अस्मिन्नेव उपक्रमे प्रक्रान्तेऽङ्के विविधाषु भाषासु क्रोडीकृताः त्रयोदशशोधनिबन्धाः तत्तदाचार्यैः उपज्ञाताः। मुदमाभजेऽहं यत् वेदस्य यथार्थावबोधायापेक्षितायाः स्वरज्ञानसामग्र्याः बहुधा प्रकारेण सप्रमाणमत्र निरूपणमाचार्यद्वयेन परिकल्पितम्। शब्दशक्तिवादे जातिशक्तिरिति सिद्धान्ते आभासितसमस्यानां निराकरणमुपपाद्य प्रतिनिधिद्रव्यविधानमपि ससामञ्जस्यं परिकल्पितम्। एवमेवानेकाः अभिनवाः प्रतिपत्तयः गवेषकैः व्यवस्थापिताः उद्भाविताश्च।

पत्रिकाशिखरेषु आत्मानमुपस्थाप्य स्वकीयं साफल्यं विधाय अजस्रं गौरवं परिपालयन्ती पत्रिकेयं भवानिजान्यनुग्रहतः बहुशः कल्याणकोटिं भजेदिति प्रार्थये।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

# सम्पादकीयम्

संस्कृतं भारतस्य जीवातुभूतं तत्त्वम्। अस्यां भाषायां विराजते विपुलं ज्ञानवैभवम्। अस्मिन् वाङ्मयेऽनुस्यूतं सकलमपि जीवनमूल्यं, निखिलमपि व्यवहारतत्त्वम्। कथं वयं जीवामः? कथं वयमाचरामः? कथं वयं व्यवहरामः? किमस्त्यस्माकं लक्ष्यम्? किं कर्म? किमकर्म? किं हानम्? किमुपादेयमेतत् सर्वं सम्यगुपदिशति सुरभारती देववाणीसंस्कृतम्।

पुरा अस्माकं देशस्यासीत् किमप्यपूर्वं गौरवमिह जगति। तत्र हेतुरासीत् जनमानसे संस्कृतस्य व्यापकत्वेन प्रभावः। एतत्प्रभावादेव मौलिभूतं स्थानमासीदस्माकमिहावनितले। ऋषीणां वैशिष्ट्यं, मुनीनां महत्त्वं, गुरूणां गुरुत्वम्, आचार्याणामाचार्यत्वमेतत्प्रभावादेव प्रसिद्ध्यति। संस्कृतमन्तरा क्व संस्कृतिः? क्व संस्कारः? क्व सदाचारः? क्व च शुचिता इति?

संस्कृतस्य गुरुत्वादेवासीदास्माकं गौरवम्। इयमस्मान् प्रतिपदं संस्करोति शिक्षयति च कथं पितृभ्यां सह प्रभवामः? आचार्येण सह कथमाचरामः? भ्रातृभिः भगिनीभिश्च सह कथं भवामः? तरुगुल्मलताकीटपतङ्गप्रभृतिप्राणिभिस्सह कथं वर्तामहे? एतत्सर्वमत्यन्तं सारल्येन मृदुवचनेन चोद्बोधयति। भारतीयानां जीवने प्रतिपदं संस्कृतस्य महानुपकारः। इयं विद्या कल्पतलतेवास्माकं जीवने सर्वमभीष्टं संसाधयति। **वसुधैव कुटुम्बकम्, संगच्छध्वं संवदध्वम्, सर्वे भवन्तु सुखिनः, मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे, लोकाः समस्ताः सुखिनो भवन्तु** इत्यादिवचनपुञ्जैर्विज्ञापितायाः विश्ववन्धुत्वभावनायाः चिन्तनमेतस्याः सर्वातिशयत्वं द्योतयति।

अतः सर्वैरपि मानवैः आत्मगौरवाय, विश्वकल्याणाय, सुखाय, शान्त्यै, समृद्ध्यै च संस्कृतं सततं पठनीयं, चिन्तनीयं, मननीयम्, आश्रयणीयञ्च।

विश्वविद्यालयानुदानायोगेन स्वीकृतासु सन्दर्भितशोधपत्रिकास्वन्यतमा श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्य त्रैमासिकी शोधपत्रिका ''शोधप्रभा''। इयं विगतेभ्यः द्विचत्वारिंशद्वर्षेभ्यः नैरन्तर्येण मौलिकोत्कृष्टान्वेषणान्वितशोधपत्रप्रकाशनपरायणा अनुसन्धानक्षेत्रे विशिष्टं स्थानं बिभर्ति। पत्रिकेयं संस्कृतविदुषामनुसन्धित्सूनां छात्राणाञ्च चिन्तनप्रकर्षप्रकाशनाय अनुद्घाटितज्ञानवैभवस्योद्घाटनाय महोपकारिकेति मे दृढीयान् विश्वासः।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः त्रयोदशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातृणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयानोऽहं निकषधिषणापूरितविषयवस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् सुमनसः मनीषिणः।

**डॉ. शिवशङ्करमिश्रः**

सहाचार्यः, शोधप्रकाशनविभागस्य

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

ISSN - 0974-8946 शोधप्रभा
जुलाई-सितम्बर, 2017 वर्षः 42, तृतीयोऽङ्कः

# वैदिक-स्वर-विषयिणी शास्त्रीय-दृष्टिः

डॉ. रणजितबेहेरा*

## द्वितीयो भागः

### 34. स्वरार्थयोः सम्बन्धः

उदात्त-अनुदात्त-स्वरितस्वराणामर्थेन सह कः सम्बन्ध इत्येतत् निम्नदृशा सम्यक्तया अवगन्तुं शक्यते -

प्राचीनवैयाकरणानां नैरुक्तानां च मते संस्कृतभाषायामुपलब्धानि सर्वाणि नामपदानि आख्यातजानि अर्थात् कस्यापि धातोः प्रत्ययस्य वा संयोगेन तेषां निष्पत्तिः भवति।[1] एकस्मिन् पदे प्राय एक एव वर्ण उदात्तः भवति, अवशिष्टा वर्णा अनुदात्ताश्च भवन्ति।[2] परमुदात्तानुदात्तयोः स्वरयोः उदात्तस्वरः मुख्यो वर्तते। तदनुसारं पदस्य प्रकृतेः प्रत्ययस्य वा यस्मिन् भागे उदात्तस्वरो विद्यते, तस्यैवांशस्य अर्थः मुख्यः भवति। यथा निरुक्तकारेण यास्काचार्येण स्वीये निरुक्तग्रन्थे स्वीकृतम् - 'तीव्रार्थतरमुदात्तम्, अल्पीयोऽर्थतरमनुदात्तम्'।[3]

अतोऽस्मात् स्फुटं प्रतीयते यत् यत्र वक्ता स्वीयमभीष्टार्थं प्रकटयितुमिच्छति तस्यैवांशस्योपर्युदात्तस्वरः भवति। स एव अर्थः मुख्यो भवति। एतदर्थमुदात्तस्वरः प्रधानस्वरः मन्यते। उदात्तस्वरस्य प्राधान्यविषये स्वरार्थयोः सम्बन्धाः तथा स्वरपरिवर्तनेन अर्थपरिवर्तनमप्यवगन्तुं शक्यते। सम्बन्धेऽस्मिन् उदाहरणद्वयं प्रदीयते-

पुरुतम पुरुणामृक् (ऋ.1.5.2)।

शुष्मिन्तमो हि ते मदो। (ऋ. 1.127.9)

उपर्युक्तयोः उदाहरणयोः पुरुतमपदं 'तमप्' प्रत्ययान्तत्वात् 'अनुदात्तौ सुप्पित्तौ' इत्यनेन सूत्रेण प्रत्ययांशः अनुदात्तोऽभीष्ट आसीत्, किन्तु प्रत्ययार्थस्य प्राधान्यत्वात् उदात्तस्वरः पठितः।[5] परन्तु द्वितीयोदाहरणे 'शुष्मिन्तमो' पदे तमप्प्रत्ययत्वात् 'अनुदात्तौ सुप्पितौ' सूत्रेण प्रत्ययांशः अनुदात्तः

* एसोसिएट प्रोफेसर, संस्कृतविभागः, दिल्ली-विश्वविद्यालयः, दिल्ली-110007

1. नि., 1.4 : सर्वाणि आख्यातजानि नामानि स्युः।
2. अष्टा., 6.1.158 : अनुदात्तं पदमेकवर्जम्।
3. नि., 4.24.
4. अष्टा., 3.1.4
5. ऋग्वे., 1.8.3 : 'पुरुतमं पुरुणाम्' ऋग्भवेत्तत्र निदर्शनम्।
   तमप्चेदनुदात्तः स्यात्तथा ह्यन्यत्र दर्शनम्।

द्रष्टव्यः, यतो ह्यत्र प्रकृत्यर्थस्य प्राधन्यं विद्यते।[1]

अतः समानसंदृश्यमानानां शब्दानामर्थनिर्धारणं स्वरमाध्यमेन करणीयम्। एतदर्थं तृन्-तृच्-प्रत्ययान्तशब्देषु स्वराणामाधारः द्रष्टुं शक्यते –

**(क) तृन्-प्रत्ययान्तः**

निम्नोदाहरणेषु तृन्-प्रत्ययान्तशब्दानां प्रयोगः द्रष्टुं शक्यते, यत्र प्रत्ययार्थः गौणः विद्यते –

होम गन्तारमूतये (ऋ. 1.9.9)। गन्तारम्। जेतारमपराजितम् (ऋ. 1.11.2)। जेतारम्।

पाता सुतमिन्द्रोऽस्तु (ऋ. 6.23.3)। पाता। स चेता देवता पदम् (ऋ. 1.22.5)। चेता।

उपर्युक्तस्थलेषु क्रियार्थप्राधान्यत्वात् धात्वंशे उदात्तः जातः,[2] पुनश्च प्रत्ययार्थः गौणः वर्तते।

**(ख) तृच्-प्रत्ययान्तः**

निम्नोदाहरणेषु तृच्-प्रत्ययान्तशब्दानां प्रयोगः द्रष्टव्यः, यत्र प्रकृत्यर्थः गौणरूपेण स्वीकृतः –

इन्द्रो विश्वस्य दमिता (ऋ. 3.34.6)। दमिता। भेत्ता पुरां शाश्वतीनाम् (ऋ. 8.17.14)। भेत्ता।

उपर्युक्तयोः तृजन्तपदयोः प्रत्ययार्थप्राधन्यात् प्रत्ययांशस्योपरि उदात्तः जातः,[3] पुनश्च प्रकृत्यर्थः गौणरूपेण स्वीकृतः।

उदात्तस्वरस्य महत्त्वं स्वीकृत्य वेङ्कटमाधावेन समासस्वरं विविच्योल्लिखितं यत् पदे, समासे, पदस्य वर्णे वा यत्र कुत्रापि उदात्तः दृश्यते, तस्यैवांशस्य अर्थप्रतीतिं कारयन् ध्वनिं अर्थ-सार्थक्यं वा जानीयात्।[4] समासस्वरविषये तस्याभिमतं यत् समासस्वरः केवलं देवताभिरवगम्यते।[5]

अतः वेङ्कटमाधवेन स्वीकृतं यत् स्वरेण एवार्थव्यवस्था जायते, परं ये जनाः स्वीकुर्वन्ति यत् स्वरव्यवस्था व्याकरणदृशा क्रियते, तर्हि तत् तर्कसङ्गतमिति नानुमीयते।[6] अतः वेङ्कटमाधवेन अर्थनिर्धारणाय

---

1. ऋग्वे., 1.8.4 : शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः।
   नात्रेदात्तौ तमौ दृष्टौ दृश्यते तु पुरुतमे।
2. अष्टा., 6.1.197 : ञ्नित्यादिर्नित्यम्।
3. तदेव, 6.1.163 : चितः।
4. ऋग्वे., 1.1.22 : एवं पदे समासे च यत्रेदात्तो व्यवस्थितः।
   वर्णे पदे वा तत्रापि काकुस्तीति निश्चयः।।
5. तदेव, 1.1.23 : तत्रैकस्मिन् पदे काकुर्देवैरेवावगम्यते।
   सूक्ष्मविद्भिः समासस्थः प्राकृतैरपि तिङ्स्वरः।।
6. तदेव, 1.1.25 : मन्यन्ते पण्डितास्त्वन्ये यथा व्याकरणं स्वरम्।
   व्यवस्थितो व्यवस्थायां हेतुः कश्चिन्न विद्यते।।

स्वरस्य उपादेयता, तस्य आवश्यकतां च मुक्तकण्ठेन स्वीकृत्य समासस्वरविषये इत्थं प्रतिपादितं यत् यस्मिन् समासे उत्तरपदार्थस्य प्राधान्यं भवति, तत्रोत्तरपदे उदात्तस्वरः वर्तते,[1] यथा –

**सुरुपकृत्नुमूतये (ऋ. 1.4.1)। सुरुपकृत्नम्।**

**द्रविणोदाः द्रविणं सः (ऋ. 1.4.1)। द्रविणोदा।**

अनयोः द्वयोरुदाहरणयोः उत्तरपदार्थस्य प्राधान्यत्वात् उत्तरपदे अन्तोदात्तस्वरः जातः। परन्तु यस्मिन् समासे पूर्वपदस्य प्राधान्यं दृश्यते, तत्र पूर्वपदे उदात्तस्वरः भवति, पुनश्च अर्थदृष्ट्या तस्यैवांशस्य प्रामुख्यं मन्यते,[2] यथा –

भर्ग भक्तस्य ते वयम् (ऋ. 1.24.4)। भग।

विप्रं जूतः सुतावं तः (ऋ. 1.3.5)। विप्र।

अना धृष्टास ओजं सा (ऋ. 1.19.4)। अना (नञ्तत्पुरुषः)।

उपर्युक्तनिदर्शनेन स्फुटं प्रतीयते यत् समासस्य यस्मिन् पदे उदात्तस्वरः भवति, तस्य पदस्यार्थः प्रमुखो भवति। अतः समस्तपदेषु यत्र-यत्र उदात्तस्वरः विद्यते, तस्यार्थस्य प्राधान्यं केनापि प्रकारेण काशकुशावलम्बन्यायेन स्पष्टतया प्रतिपादनीयम्।[3] परं यानि पदानि स्वतन्त्रतया आद्युदात्तानि अन्तोदात्तानि वा भवन्ति, तान्येव पदानि यदा समासे समस्यन्ते तदा समासानुसारं तेषां प्रकृतिस्वरः परिवर्तते पुनश्च तानि पदानि क्रमात् अन्तोदात्ते आद्युदात्ते वा परिवर्तन्ते, यतो हि अस्यां परिस्थितौ उदात्तस्वरः तस्मिन् पदे भवति, स एव शब्दः अन्तोदात्तो भवतु आद्युदात्तो वा। अतः समासे सर्वदा उदात्तपदस्य प्राधान्यमनुभूयते।[4]

## 45. स्वरपरिवर्तनम् अर्थपरिवर्तनञ्च

स्वरार्थसम्बन्धस्पष्टीकरणाय स्वरपरिवर्तनेन अर्थपरिवर्तनमपि एकः प्रमुखः विन्दुः स्वीकर्तुं शक्यते। स्वरपरिवर्तने कृते सति यदि अर्थपरिवर्तनं भवति तर्हि परिवर्तनमिदं स्वरार्थसम्बन्धयोः महत्त्वं द्योतयति।

प्रायः विद्वद्भिरेतद् स्वीकृतं यत् वैदिकभाषायाः पदेषु स्वरपरिवर्तनेन अर्थपरिवर्तनं जायते।

---

1. तदेव, 1.3.3 : तत्रेत्तरपदार्थस्य प्राधान्यं यत्र वर्तते।
   उदात्तस्तत्र भवति सुरूपकृत्नुमूतये।।
2. तदेव, 1.3.5 : यदि स्वरः पूर्वपदे तदर्थः प्रस्फुटो भवेत्।
   भगभक्तस्य ते वयं विप्रजूतः सुतावतः।।
3. तदेव, 1.3.23 : सर्वेष्वेषु समासेषु यत्र यत्र स्वरो भवेत्।
   काशं कुशं वाऽवलम्ब्य स्वरं तं स्थापयेदितिम्।।
4. वै. प. को., खण्डः - 1, भागः-1

स्वर-स्थान-परिवर्तनं निश्चयेन पदस्य व्युत्पत्ति-लभ्यर्थ पतिपादयति। अर्थपरिवर्तनस्य कारणानीमानि भवितुमर्हन्ति[1], तद्यथा-

**( i ) प्रकृतिभेदेनार्थपरिवर्तनम्।**

शब्दानां प्रकृतौ(मूले) भेदत्वादर्थपरिवर्तनं दृश्यते, यथा

मन्त्रकृत् - कृ (करणे) - ऋषिः। दारुकृत् - कृत् (छेदने) - तक्षा।

**( ii ) प्रत्ययपरिवर्तनेनार्थपरिवर्तनम्।**

पदेषु प्रयुक्तानां प्रत्ययानां भेदत्वात् अर्थपरिवर्तनं स्वाभाविकं वर्तते, यथा-

अ॒ष्टा (1.21.8 - भोक्ता)। अ॒ष्ट (8.2.41 - अष्टसंख्यकः)।

केतः (1.24.12 - प्रज्ञापकः)। केता॑ः (1.55.7 - ज्ञाता)।

गिर॑ः (1.6.6 - स्तोता)। गि॒रिः (1.37.7 - पर्वतः)।

नभ॑ः (1.71.10 - अन्तरिक्षम्)। नभ॑ः (1.174.8 - हिंसा)।

**( iii ) विकरणभेदेनार्थपरिवर्तनम्।**

क्रियापदेषु प्रयुक्तेषु विकरणेषु वैभिन्नयत्वात् अर्थपरिवर्तनं जायते, यथा - कृ (करणे) करति, करिष्यति, करात्, अकः, चकार।

**( iv ) निपातनेनार्थपरिवर्तनम्।**

वेदे निपातनान्यप्यर्थपरिवर्तनस्य कारणानि भवन्ति, यथा

(क) दर्शानः

पृथिवी, अन्तरिक्षम्, द्यौ, अश्वः, औषधिः, गृहः, स्तुति इत्यादयः।

(ख) ऋतम्

यज्ञः, सत्यम्, दिव्यनियमः, उदकमादयः।

**( v ) समासवृत्तिद्वारा अर्थपरिवर्तनम्।**

समासविग्रहकारणात् कदाचित् पदे अर्थपरिवर्तनं जायते। परन्तु यद्येतद् सन्देहास्पदसाधनं कथ्यते, तर्हि अतिशयोक्तिः न भविष्यति, यथा - 'इन्द्रशत्रुः' (इन्द्रस्य शत्रुः, इन्द्रः शत्रुः यस्य सः वा) इत्येतद् शिलष्टपदं वर्तते। पदमेतद् कुत्रापि कस्मिन्नर्थे न प्रयुक्तोऽस्ति, एतद् बहुधा प्रकरणेनापि

1. वै. प. को., खण्डः - 1, भागः-1

ज्ञातुं न सम्भवति। यद्यस्मिन् विषये स्वरस्य सहायता स्वीक्रियते, तर्हि अर्थः पूर्णतया स्पष्टः भवति। यदि पदमाद्युदात्तमस्ति, तर्हि बहुव्रीहिसमासत्वादन्यपदार्थप्रमुखः भविष्यति। अर्थात् इन्द्रेण मारितः शत्रु इति। यदि पदमेतदन्तोदात्तं वर्तते, तर्हि त्तपुरुषसमासत्वात् अन्यपदार्थप्रमुखः भविष्यति, अर्थात् इन्द्रस्य हन्ता इति।[1]

### ( iv ) लिङ्गभेदेनार्थपरिवर्तनम्।[2]

लिंगभेदद्वाराऽपि पदार्थः परिवर्तते, यथा

| पदम् | अर्थः | पदम् | अर्थः |
|---|---|---|---|
| अर्बुदः | असुरविशेषः | अर्बुदम् | संख्याविशेषः। |
| अविषः | विषहीनः। | अविषम् | विषनाशकौषधिः। |
| मानः | प्रमाणः। | मानम् | मापनसाधनम्। |
| शुषः | बलवान्। | शुषम् | बलम्। |

उपर्युक्तानां पदानामवलोकनेनैव प्रतीयते यत् एतेषामर्थपरिवर्तनं लिङ्गभेदद्वारा अवगन्तुं शक्यते। परमर्थपरिवर्तनमिदं प्रथमा-द्वितीयाविभक्तिभ्यां यावत् पूर्णतया स्पष्टं भवति। किन्तु तृतीयातः सप्तमीविभक्तिपर्यन्तमर्थपरिवर्तनं स्वरमाध्यमेन ज्ञातुं शक्यते।

### ( vii ) स्वरपरिवर्तनेनार्थपरिवर्तनम्।[3]

वेदे स्वरस्यार्थेन सह घनिष्ठसम्बन्धः विद्यते। वैदिकशब्दानामर्थ-परिवर्तनस्य प्रमुखकारणं स्वरपरिवर्तनं वर्तते। स्वरकारणादर्थपरिवर्तनस्य स्पष्टीकरणाय केषांचित् शब्दानां सूची प्रदीयते –

अक्षरम् (1.164.42) – उदकम्। अक्षराणाम् (3.31.6 – क्षयरहितम्।

अरुषम् (1.6.1) – हिंसारहितः अग्निरूपेणावस्थितः। अरुषी (1.14.12) – गतिमती।

आयुः (1.10.11) – जीवनम्। आयुः (1.31.2) – मनुष्यः।

काव्य (1.84.5) कवेः पुत्रः। काव्यं (1.96.1) – काव्यम्

दात्रम् (1.116.6) – दानम्। दात्रम् (8.78.10) – लवनसाधनम्।

उपर्युक्तशब्दसमूहेन स्फुटं प्रतीयते यत् स्वरपरिवर्तनेन अर्थपरिवर्तनं स्वाभाविकमिति। वैदिकसाहित्ये बहुविधं स्वरपरिवर्तनैरर्थपरिवर्तनं स्पष्टतया द्रष्टुं शक्यते। वस्तुतः पदेषु मुख्यस्वर

1. महा., 1.1.1 : यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति।
2. द्र. वै. प. को., डॉ. विश्वबन्धुः, होशियारपुरम्।
3. द्र. वै. प. को., डॉ. विश्वबन्धुः, होशियारपुरम्।

उदात्तः नित्यस्वरितो वा तत्र भवति यत्र वैशिष्ट्यं वर्तते। विशेषतेयमर्थपूर्णा भवति, यथैव क्रियापदेषु मुख्यतः त्रिविधं पदाङ्गमुपलभ्यते धातुः विकारः प्रत्ययश्चेति। अनेन सह उपसर्गा इडादय आगमाश्चोपलभ्यन्ते। प्रायः अङ्गान्येतानि उदात्तयुक्तानि भवन्ति, येषां द्योतनमेव वक्तुः अभीष्टं वर्तते। क्रियापदानां सम्बन्धेऽपि एतत् अवधेयं यत् क्रियापदानां स्वरपरिवर्तनेन अर्थपरिवर्तनं भवति, यथा - जुहोति, जुहोति।

उदाहरणेऽस्मिन् स्वरपरिवर्तनस्य कारणमर्थप्राधान्यं नास्ति। विकरणाभावात् धातु-अभ्यासयोर्मध्ये स्वरो विकल्पो भवति। परन्तु प्रत्ययभिन्नतां परित्यज्य अन्यत् किमपि कारणं स्वरव्यत्यये न विद्यते। तत्र अर्थपरिवर्तनं भवितुं न शक्नोति, यतो हि समान-उच्चारणयुक्तपदानां स्वरपरिवर्तनेन अथरपरिवर्तनमपि भविष्यत्येतद् ग्रहणमर्थपूर्णं न वर्तते। यदि अर्थवैभिन्नयं वर्तते, तर्हि व्यत्ययस्यास्य कारणं प्रकृतिव्यत्ययोऽपि भवितुं शक्यते। अतः स्वरपरिवर्तनेन अर्थपरिवर्तनस्योपरि विचारसमये एतद् सम्यक्तया अवधारणीयमिति।

कदाचिद् शाखाभेदकारणादपि पदेषु स्वरभेदो जायते, परन्तु अर्थभेदः न जायते। स्वरवृत्तिरेषा निपातननियमान्तर्गते समावेष्टुं शक्यते, परन्तु एतत् स्वीक्रियते चेत् प्रत्येकं विकल्पः निपातनसिद्धः भविष्यति। एतदर्थं विशेषविचारस्य अवसराभावः भविष्यति। प्रायः रुढिः निपातनं च स्वरविषमतायाः कारणे भवतः।

### ( viii ) स्वरमाध्यमेन द्व्यर्थकपदानामर्थनिर्धारणम्।

वैदिकमन्त्रेषु विद्यमानानामर्थानां सन्देहनिवारणाय मुख्यतः स्वर एव आधारो वर्तते, येन सम्यक् स्पष्टीकरणं जायते, यथा - भ्रातृव्यस्य वधाय।[1] मन्त्रांशेऽस्मिन् प्रयुक्तस्य भ्रातृव्यशब्दस्यार्थद्वयं वर्तते, शत्रुः भ्रात्रीयश्चेति। अत्र सन्देहपजायते यत् अस्मिन् वैदिकमन्त्रे शत्रुनाशस्य विधानं कृतं विद्यते भ्रात्रीयस्य वा। अस्य सन्देहनिवारणं स्वरशास्त्रं विना नैव सम्भवति, यतो हि स्वरेणैव निर्णयः भवति यत् आद्युदात्तस्य भ्रातृव्य-शब्दस्यार्थः शत्रुः, अन्त्यजात्यस्वरितस्य 'भ्रातृव्य'शब्दस्यार्थः भ्रात्रीयश्चेति। पाणिन्यनुसारं भ्रातृशब्दः व्यन्प्रत्ययेन निष्पद्यते।[2] अतः व्यन् - प्रत्ययः नित्वात् पदमिदमाद्युदात्तमस्ति।[3] एवमेव भ्रात्रीयस्यार्थेऽपि भ्रातृशब्दात् यत्प्रत्ययः भवति,[4] अतः शब्दोऽयं तिदनुबन्धत्वादन्तजात्यस्वरितः भवति।[5] अतः पदेषु प्रयुक्तैः स्वरैरेव निर्णीयते यत् पदं कस्मिन् अर्थे प्रयुक्तमिति।

### ( ix ) स्वरमाध्यमेन निपातानामर्थनिर्धारणम्।

वैदिकमन्त्रेषु 'मा'शब्दस्य प्रयोगः बहुधा उपलभ्यते। यद्यपि प्रकरणादिभिः तस्यार्थोऽवगन्तुं शक्यते, तथापि स्वरमाध्यमेन तस्यार्थः यथार्थरूपेणावगम्यते -

---

1. माध्य. सं. 1.18
2. अष्टा., 4.1.145 : व्यन्सपत्ने।
3. तदेव, 6.1.197 : ञ्नित्यादिर्नित्यम्।
4. तदेव, 4.1.144 : भ्रातुर्व्यच्च।
5. तदेव, 4.1.185 : तित्स्वरितम्।

(क) यदि 'मा'शब्दः उदात्तयुक्तः स्यात् तर्हि सः नञर्थवाचकः भवति, पुनश्च यदि निपातरूपेण प्रयुक्तोऽस्ति[1], तर्हि तद् निम्नोदाहरणैः ज्ञातुं शक्यते –

मा हिंसिष्ट पितरः केन चिन्नो यच्च आगः पुरुषता कराम।[2]

अक्षैर्मा दीव्यः कृषिमित्कृषस्व।[3]

मा नो घोरेण चरिताभिधृष्णु।[4]

उपर्युक्तेषूदाहरणेषु 'मां इति पदमेतत् निपातत्वात् आद्युदात्तो वर्तते।

(ख) यदि 'मा'शब्दः अनुदात्तः भवति, तर्हि स सर्वनामवाचकत्वाद् स्वकीयार्थे प्रयुक्तः भविष्यति, यथा –

प्रावेपा मा बृहतो मादयन्ति।[5]

न मा मिमेथ न जिहीळद एषा।[6]

उप मा पेपिशत्तमः।[7]

## 6. स्वर-व्यत्ययः

आचार्येण पाणिनिना 'व्यत्ययो बहुलम्' इत्यनेन सूत्रेण व्यत्ययशब्दः स्पष्टतया प्रतिपादितः। एतद् व्यतिरीच्यान्यैः विद्वद्भिरपि व्यत्ययशब्दस्य सरलपूर्वकं प्रतिपादनाय स्व-स्व-मतानि प्रदत्तानि सन्ति। काशिकावृत्तिकाराभ्यां वामनजयादित्याभ्यां व्यत्ययशब्दः एवं सुस्पष्टः प्रतिपादितो यत् –

'व्यतिगमनं व्यत्ययो व्यतिहारः, विषयान्तरे विधानं क्वचिद् द्विविकरणता, क्वचित् त्रिविकरणता च'। हरदत्तेनापि स्वव्याख्यायां लिखितं यत् अन्यान्यविषयावगाहनमित्यर्थः (पदमञ्जरी)।[8] विवेचनानेन स्फुटं प्रतीयते यत् व्यत्ययस्यार्थः व्यतिगमनं, विषयान्तरविधानं, अन्यविषये अन्यत् कार्यविधानमर्थात् विहितानां नियमानामुल्लङ्घनञ्चेति।

व्यतिगमनमर्थात् अवगणनां कृत्वा ऊर्ध्वगमनम्, परिवर्तनम्, अनियमितरूपेण प्रयोगः, व्यतिहारः अर्थात् विकल्पः इत्येतेष्वर्थेषु व्यत्ययशब्दो व्यवह्रियते।[9] वैदिकभाषायां विवक्षितविभक्तेः स्थाने अपरायाः विभक्तेः, एकवचनस्थाने बहुवचनस्य, आत्मनेपदस्थाने परस्मैपदस्य नपुंसकन्लिलङ्गस्थाने पुंल्लिङ्गस्य, प्रथमपुरुषस्थाने उत्तमपुरुषस्य मध्यमपुरुषस्य वा, वर्तमानकालस्थाने भूत-भविष्यदादेः

---

1. द्र.त्रिपाठीपारसनाथः : वैदिक-स्वर-अवधारणा, पृ-101-102
2. ऋ, 10.15.6
3. तदेव, 10.34.13
4. तदेव, 10.34.14
5. तदेव, 10.34.14
6. तदेव, 10.34.2
7. तदेव, 10.127.7
8. अष्टा., 3.1.85 उपरि पदमञ्जरी।
9. अष्टा., 8.1.1 : 'बहुलं छन्दसि' उपरि सरस्वतीकण्ठाभरणम्।

अन्यकाल- वाचकस्य वा, एकवर्णस्थाने अन्यवर्णस्य, उदात्तानुदात्तस्वरितेषु एकस्य स्थाने अपरस्य, विकरणानां परस्परमेकस्य स्थाने अपरस्य च प्रयोगः अनेकत्र समुपलभ्यते। प्रयोगा इमे व्यत्ययरूपेण स्वीक्रियन्ते वैयाकरणैः। इमे सर्वे व्यत्ययाः वैदिकसंस्कृते निम्नरूपेषूपलभ्यन्ते, येषामुल्लेखः महाभाष्यकारेण सोदाहरणमेवं प्रदत्तम्, यथा -

**(क) सुप्-व्यत्ययः**

सुप्-विभक्ति-प्रत्ययसन्दर्भे वेदेषु अनेके व्यत्ययाः दृश्यन्ते यथा - युक्ता मातासीद्धुरि दक्षिणायाः (ऋ. 1.164.9)। मन्त्रेऽस्मिन् 'दक्षिणायाः' इत्यस्मिन् पदे मन्त्रार्थदृष्ट्या सप्तमीविभक्तेः विवक्षा आसीत् परमत्र षष्ठीविभक्तेः प्रयोग उपलभ्यते।

**(ख) तिङ्-व्यत्ययः**

एवमेव तिङन्तपदानामपि व्यत्ययो दृश्यते, यथा - 'चषालं ये अश्वयूपाय तक्षति' (ऋ. 1. 162.6)। मन्त्रेऽस्मिन् 'तक्षन्ति' इत्यस्य बहुवचनक्रियापदस्य विवक्षा आसीत्, परन्तु अत्र व्यत्ययत्वादेकवचनस्य प्रयोगः वर्तते।

**(ग) उपग्रह-व्यत्ययः**

अत्रोपग्रहस्यार्थः भवति परस्मैपदमात्मनेपदं वा। वेदेषु प्रायः आत्मनेपदीधातोः परस्मैपद्रस्यः, अथ च परस्मैयदस्य स्थाने आत्मनेपदस्य प्रयोगः परिलक्ष्यते, यथा - 'त्वां वर्धन्तु नो गिरः' (ऋ. 1. 5.8)। अत्र 'वृध्' धातोः आत्मनेपदिरूपस्य विवक्षा आसीत् परन्तु व्यत्ययेनात्र परस्मैपदिधातुरूपं प्रयुक्तमस्ति।

**(घ) लिङ्ग-व्यत्ययः**

वेदेषु त्रिषु लिङ्गेषु व्यत्ययः प्रयुक्तोऽस्ति, यथा - 'द्रप्साः मध्वः चमूऽसदः'। अस्मिन् मन्त्रांशे आगतस्य मधुशब्दस्य मधुनः रूपमपेक्षितमासीत्, परन्तु नपुंसकरूपस्थाने पुंल्लिङ्गस्य रूपं प्रयुक्तम्।

**(ङ) पुरुष-व्यत्ययः**

प्रथम-मध्यम-उत्तमपुरुषाः सामान्यतया तृतीय-द्वितीय-प्रथम-पुरुषाः कथ्यन्ते। एतेषां प्रयोगेऽपि व्यत्ययो दृश्यते, यथा - 'अधा स वीरैर्दशभिर्वियूयाः' (ऋ. 7.104.15)। मन्त्रांशेऽस्मिन् 'वियुयात्' इत्यत्र प्रथमपुरुषस्य प्रयोगोऽपेक्षित आसीत्, परन्तु व्यत्ययकारणात् मध्यमपुरुषस्य प्रयोगः जातः। अस्य अपरमुदाहरणम् - प्रयःऽइव प्र यंसि (ऋ.1.61.2)। अत्राऽपि उत्तमपुरुषस्य स्थाने व्यत्ययत्वात् मधयमपुरुषः प्रयुक्तः।

**(च) काल-व्यत्ययः**

वेदे कालविषयेऽपि व्यत्ययः प्रयुक्तो वर्तते, यथा - 'श्वौऽग्नीनाधास्यमानेन। श्वः सोमेन यक्ष्यमाणेन'। मन्त्रेऽस्मिन् 'आधाता' 'यष्टा' इत्यनयोः अनद्यतन- भविष्यत्काल-लुट्लकाररूपमपेक्षितमासीत् परं तयोः स्थाने सामान्यभविष्यत्काल- लृट्लकारस्य कृदन्तप्रयोगः विहितः।

**( छ ) हल् ( व्यञ्जन )-व्यत्ययः**

वेदे हल्वर्णानां प्रयोगेऽपि व्यत्ययो दृश्यते, यथा – 'त्रिष्टुभौजः शुभितमुग्रवीरम्'। अस्मिन् मन्त्रांशे 'शुधितम्' इत्यस्य पदस्य प्रयोगः अपेक्षितः परन्तु धकारस्थाने भकारं प्रयुज्य 'शुभितम्' पदं प्रयुक्तम्।

**( ज ) अच्-व्यत्ययः**

वैदिकमन्त्रेष्वच्वर्णानां प्रयोगेऽपि व्यत्यय उपलभ्यते, यथा – 'उपगायन्ति मा पत्नयो गर्भिणयः'। मन्त्रांशेऽस्मिन् ईकारान्त-स्त्रीलिंग-पत्न्यो गर्भिण्यः इत्येतयोः विवक्षा आसीत् परन्तु इकारान्त 'पत्नयः' 'गर्भिणयः' इति प्रयोगः विद्यते।

**( झ ) स्वर-व्यत्ययः**

वैदिकभाषायामुदात्तादयः स्वराः पदार्थनिर्धारकाः मन्यन्ते, अतः पदस्य यस्मिन्नंशे स्वरविवक्षा वर्तते तत्रैव अर्थस्य प्राधान्यं गृह्यते। अर्थविशेषस्य ज्ञापनाय उदात्त-अनुदात्त-स्वरित-स्वराणां प्रयोगेऽपि स्वरव्यत्ययः दृश्यते, यतो हि ऋषिभिः यथा विवक्षितमासीत् तथैव स्वरस्य कार्यमभूत्, यथा-'यशसं वीरवत्ऽतमम्' (ऋ. 1.1.3)। अत्र 'यशसं' पदं चित्स्वरादन्तोदात्तं प्रयोक्तव्यमासीत् परन्तु स्वर-व्यत्ययत्वात् मध्योदात्तं प्रयुक्तम्।

**( ञ ) कर्तृ-व्यत्ययः**

वेदे कारकाणां प्रयोगेऽपि व्यत्ययः दृश्यते, यथा – 'आसादयद्‌भिरुभयोर्वेदाः'। अस्मिन् मन्त्रांशे 'आसादयद्‌भ्यः' इत्येतत्स्मिन् पदे सम्प्रदानार्थे चतुर्थीविभक्तिः अपेक्षिता आसीत्, परन्तु तत्स्थाने करणार्थकतृतीयाविभक्तेः प्रयोगः दृश्यते, एतत् व्यत्ययत्वात् सम्भवत्येव।

**( ट ) यगादि ( प्रत्यय )-व्यत्ययः**

वेदे प्रयुक्तेषु आख्यातपदेषु विकरणव्यत्ययोऽप्युपलभ्यते, यथा – 'मुण्डा शुष्मस्य भेदति'। मन्त्रांशेऽस्मिन् प्रयुक्तस्य 'भेदति' इत्यस्य पदस्य स्थाने भिद्-धातुः रुधादिगणीयत्वात् 'श्नम्'-विकरणपूर्वकं 'भिनत्ति' रूपमपेक्षितमासीत्, परन्त्वत्र भ्वादिगण-शप्-प्रत्ययेन निष्पन्नस्य 'भेदति' रूपस्य प्रयोगः दृश्यते, यः विकरण- व्यत्ययस्य परिणामो वर्तते।

एवमेव लौकिकसंस्कृतेऽपि एतादृशाः ये प्रयोगाः विद्यन्ते, शास्त्रकारैः त एव प्रयोगाः अशिष्टा अशास्त्रीयाश्चोक्ताः, परं वैदिकसंस्कृते एत एव प्रयुज्यन्ते, यतो हि वेदाः अनादिकालात्प्रवहमानाः सन्ति। अतः वेदे प्रयुक्तत्वात् प्रयोग इमे अशिष्टाः शास्त्रविरुद्धाश्चेति कथयितुं न शक्यन्ते। एतदर्थं व्याकरणशास्त्रकारैः एतेषां प्रयोगाणां शास्त्रीयसिद्ध्यर्थं लौकिकप्रयोगविश्लेषणे अपवाद-व्यत्यय- बाहुलकादीनां प्रयोगो विहितः।

उपर्युक्तात् विवेचनात् विज्ञायते यत् वेदमन्त्राणां शुद्धोच्चारणाय तेषामर्थज्ञानाय च स्वरज्ञानमावश्यकमिति। यावत् स्वरज्ञानं न भविष्यति तावत् ऋषेरभिप्रेतं मन्त्रणामर्थज्ञानं नैव सम्भवति।

ISSN - 0974-8946 शोधप्रभा
जुलाई-सितम्बर, 2017 वर्षः 42, तृतीयोऽङ्कः

# देवो भूत्वा यजेद् देवानित्यस्य शास्त्रीयो विमर्शः

श्रीरविन्द्रकुमारपण्डा*

वचनमिदं बहुषु तन्त्रग्रन्थेषु पाठभेदपुरस्सरमुपलभ्यते। **'देवो भूत्वा देवानप्येति'**[1] इति बृहदारण्यकोपनिषदि चतुर्थाध्यायीये प्रथमे ब्राह्मणे बहुशः श्रूयते। अपि च, शतपथब्राह्मणे दर्शपूर्णमासप्रकरणारम्भे यजमानः- **'इदमहमनृतात् सत्यमुपैमि'**[2] इति, अन्ते च- **'य एवास्मि सोऽस्मि'** इति वक्ति। **'अनृतं वै मनुष्याः सत्यं देवाः'** इति च तत्रैव व्याक्रियते। एवं च मनुष्यभावं परित्यज्य देवभावं चाङ्गीकृत्य यजमानो यज्ञयागादिषु प्रवर्तेतेति तस्याभिप्रायो व्यक्तीभवति, अनुष्ठानसमाप्तौ च यजमानः पुनर्मनुष्यभावमयत इति च। एतदर्थम्- **'स वै सत्यमेव वदेत'** इत्येतावानेव तत्रोच्यते, नाधिकं किञ्चित्। स्वयमिष्टदेवस्वरूपो भूत्वा देवानाराधयेत- इति किल सर्वस्यास्य वचनजातस्याभिप्रायः। पूजकः कथं नाम देवस्वरूपो भवितुमर्हतीति जिज्ञासायां शास्त्रेषु भूतशुद्धिप्राणप्रतिष्ठयोर्विधानं दरीदृश्यते।

## भूतशुद्धिः-

तत्र कुम्भकप्राणायामेन मूलाधारात् कुण्डलीं परदेवतां बिसतन्तुनीयसीं समुत्थाप्य ब्रह्मरन्ध्रगतां स्मृत्वा हृदयस्थं लीवं प्रदीपकलिकाकारं गृहीत्वा सुषुम्णामार्गेण ब्रह्मरन्ध्रं गत्वा ॐ हं सः सोऽहमिति मन्त्रेण जीवं ब्रह्मणि संयोजयेदिति हि भूतशुद्धेः संक्षिप्ततमः प्रकारः।[3] भूतशुद्धेर्लक्षणं च-

**शरीराधारभूतानां भूतानां यद् विशोधनम्।**
**अव्यक्तब्रह्मसम्पर्काद् भूतशुद्धिरियं स्मृता॥**

**भूतशुद्धिं विना कर्म क्रियते यज्जपादिकम्।**
**तत्सर्वं निष्फलं यस्मात् तस्मात् तां पूर्वमाचरेत्॥**

अनेन वचनेन च पूजाविधाविदम्प्रथमतया तस्या अनुष्ठानमावश्यकमिति प्रतिपाद्यते। शरीराधारभूतानांऽभूतानां विशुद्धये क्रमः कीदृश आश्रयणीय इति जिज्ञासायां सविनियोगः स एवं

---

* शोधच्छात्रः, वेद-पौरोहित्यविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-110016

1. बृहदारण्यकोपनिषदि,
2. शतपथब्राह्मणे, 1/1/1/4
3. तन्त्रसंग्रहतृतीयभागे संकलिते भूतशुद्धितन्त्रे सप्तदशपटलसमाप्तौ संक्षेपेण भूतशुद्धिविवरणं दृश्यते पृ. 625। ईशानशिवगुरुदेवपद्धतिप्रथमभागे भूतशुद्धिरात्मशुद्धिश्च विवृता पृ.97-101। प्रपञ्चसारदृशेषु ग्रन्थेषु धर्मशास्त्रीय निबन्धेषु च संक्षेपविस्तराभ्यां भूतशुद्धिप्राणप्रतिष्ठे विव्रियेते।

प्रदर्श्यते–

शरीरस्यात्मा ऋषिः प्रकृतिश्छन्दः, परमात्मा देवता शरीरभूतशुद्ध्यर्थे जपे विनियोगः। ॐ पृथिवीबीजमन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, पृथिवी देवता पृथ्वीभूतशुद्ध्यर्थे जपे विनियोगः। पादादिजानुपर्यन्तं पृथ्वीस्थानं[1] चतुरस्रं पीतवर्णं सबिन्दुकं लँबीजसहितं ध्यायेत्। तदुक्तम्–

**पादादिजानुपर्यन्तं भूतत्वं तत्र मण्डलम्।**
**पार्थिवं चतुरस्रं च लँबीजं वज्रलाञ्छितम्॥**

**पीतवर्णं च तं ध्यात्वा बीजोच्छ्रितेन वा पुनः।**
**भावितेन च तेनैव पृथिवीं प्राग् विशोधयेत्॥**

ॐ वरुणबीजमन्त्रस्य हिरण्यगर्भ ऋषिः, अनुष्टुप् छन्दः वरुणो देवता वारुणीभूतशुद्ध्यर्थे जपे विनियोगः। जान्वादिनाभिपर्यन्तं वरुणमण्डलं धनुषाकारं शुभ्रवर्णं सबिन्दुकं वँबीजसहितं ध्यायेत्। तदुक्तम्–

**जान्वादिनाभिपर्यन्तमापस्तत्त्वं द्वितीयकम्।**
**वारुणं मण्डलं तत्र धनुर्वद् बिन्दुलाञ्छितम्॥**

**वँबीजं शुक्लवर्णं तद्ध्यात्वाऽऽपस्तेन शोधयेत्। इति।**

ॐ वह्निबीजमन्त्रस्य कश्यप ऋषिः जगतीच्छन्दः जातवेदोऽग्निर्देवता आग्नेयभूतशुद्ध्यर्थे जपे विनियोगः। नाभ्या आरभ्य हृदयपर्यन्तं त्रिकोणमग्निमण्डलं सबिन्दुकं रँबीजसहितं ध्यायेत्। तदुक्तम्–

**नाभेर्हृदयपर्यन्तं तेजस्तत्त्वं तृतीयकम्।**

**मण्डलं वह्निसंज्ञं तत् त्रिकोणं पद्मलाञ्छितम्।**
**रँबीजं रक्तवर्णं तद् ध्यात्वा तेजस्तु शोधयेत्॥ इति॥**

ॐ वायुबीजमन्त्रस्य किष्किन्ध ऋषिः बृहतीच्छन्दः, वायुर्देवता वायव्याख्यभूतशुद्ध्यर्थे जपे विनियोगः। हृदयादारभ्य भ्रूमध्यपर्यन्तं वायुमण्डलं वर्तुलं धूम्रवर्णं सबिन्दुकं यँबीजसहितं ध्यायेत्। तदुक्तम्–

**हृदयादिभ्रुवोरन्तं वायुतत्त्वं चतुर्थकम्।**
**वायव्यं मण्डलं तत्र वर्तुलं स्वस्तिकान्वितम्।**
**कृष्णवर्णं च यँबीजं ध्यात्वा वायुं विशोधयेत्॥ इति॥**

ॐ आकाशबीजमन्त्रस्य रुद्र ऋषिः, त्रिष्टुप् छन्दः, परमात्मा देवता आकाशाख्यभूतशुद्ध्यर्थे

---

1. अन्यत्रापि सर्वेषु तन्त्रेषु पृथिव्यादिभूतानां मण्डलाकारवर्णबीजादिकमेवमेव वर्ण्यते।

जपे विनियोगः। भ्रूमध्यादारभ्य ललाटपर्यन्तमाकाशमण्डलं नोरूपमवर्णं सबिन्दुकं हँबीजसहितं ध्यायेत्। तदुक्तम्-

**भ्रूमध्याद् ब्रह्मरन्ध्रान्तं व्योमतत्त्वं च पञ्चमम्।**
**हँबीजं निर्मलं ध्यात्वा तेनैव व्योम शोधयेत्॥ इति॥**

एवं पञ्चभूतानि विशोध्य तानि यथाक्रमं स्वस्वकारणेषु विलापयेत्। तद्यथा-

**एवं भूतानि संचिन्त्य प्रत्येकं प्रविलापयेत्।**
**भुवं जले जलं वह्नौ वह्निं वायौ नभस्यमुम्॥**

**विलाप्य खमहङ्कारे महत्तत्त्वेऽप्यहङ्कृतिम्।**
**महान्तं प्रकृतौ मायामात्मनि प्रविलापयेत्॥ इति॥**

तत आत्मानं पुरुषं परब्रह्मणि प्रविलापयेत्। प्रविलाप्य च-

**अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक्।**
**सच्चिदानन्दरूपोऽहं निर्विकल्पस्वभाववान्॥**

इत्येवमात्मानं परब्रह्मस्वरूपं विभाव्य देहे पापपूरुषं ध्यायेत्। तद्यथा-

**शुद्धसच्चिन्मयो भूत्वा चिन्तयेत् पापपूरुषम्।**
**वामकुक्षिस्थितं कृष्णमङ्गुष्ठपरिमाणकम्॥**

**विप्रहत्याशिरोयुक्तं कनकस्तेयबाहुकम्।**
**मदिरापानहृदयं गुरुतल्पकटीयुतम्॥**

**तत्संयोगिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्।**
**उपपातकरोमाणं रक्तश्मश्रुविलोचनम्॥**

**खड्गचर्मधरं क्रुद्धं पूरुषं कज्जलप्रभम्। इति।**[1]

एवं पापपूरुषं ध्यात्वा जलमादाय- यँ इति वायुबीजस्य किष्किन्ध ऋषिः, जगतीच्छन्दः, वायुर्देवता, रं इत्यग्निबीजस्य कश्यप ऋषिः, त्रिष्टुप् छन्दः, अग्निर्देवता, वँ इति वरुणबीजस्य हिरण्यगर्भ ऋषिः, त्रिष्टुप् छन्दः, वरुणो देवता पापपूरुषस्य शोषणे दाहने प्लावने च विनियोगः इति संकल्प्य यँ इति वायुबीजं पूरकेण षोडशवारं जपित्वा तद्बीजोत्थवायुना पापपूरुषं शोषितं विभावयेत्। रँ इति वह्निबीजं कुम्भकेन चतुष्षष्टिवारं जपित्वा तद्बीजोत्थगिना तद् भस्मीभूतं विभावयेत्। वँ इति

1. ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः हंसर्गश्चापि तैः सह॥ इति मनुस्मृतौ वर्णितानि पञ्चपातकान्यत्र स्मर्यन्ते। संयोगिपदं संसर्गार्थकमवगन्तव्यम्। (11/54)

वरुणबीजं रेचकेन द्वात्रिंशद् वारं जपित्वा पापपूरुषभस्म प्लावयेत्– इति हि वर्तते प्रथमः कल्पः। अपरत्र तु–

**रमित्यक्षरसंयुक्तं त्रिकोणं वह्निमण्डलम्।**
**रुद्रवारं जपित्वा तु निर्दहेत् पापपूरुषम्।।**[1]

इति मतान्तरमनुसृत्य सर्वाण्यपि बीजानि एकादशवारं जपित्वा शोषणादिविधिरुच्यते। शोषदाहाप्लावानां निरूपणं प्राणायामप्रसङ्गेन प्रपञ्चसारादिष्वपि दृश्यते।[2] तत्र महार्थमञ्जरीकारेण–

**शोषो मलस्य नाशो दाह एतस्य वासनोच्छेदः।**
**आप्लावनं तनूनां ज्ञानसुधासेकनिर्मिता शुद्धिः।।**

इतीयं स्वीया गाथा स्वोपज्ञायां परिमलव्याख्यायामेवं विवृता– 'अर्चकानां ह्यर्चनोपक्रम एव काचिदलौकिकता सम्पाद्या। सा च मलोपलेपप्रक्षयादौ पर्यवस्यति। तत्र तदीयानां शरीराणां शोषो नाम तदायत्तस्य मलस्य संसाराङ्कुरकारणभूतस्याज्ञानस्य कर्शनमेवाख्यायते। दाहश्च नाम तेषां प्रस्तुतस्यैव मलस्य या वासना संस्कारसारतयाऽवस्थानम्, तद्व्युदासस्वभावो भवति। एवमाप्लावनमप्यज्ञानव्यपोहाविना-भावोद्भूतं स्वरूपलाभक्षणाह्लाददायित्वादमृतायमानं यज्ज्ञानं स्वात्मावबोधस्तत्प्रसरधारावाहि- कोपकल्पिता शुद्धिः पवित्रीकरणमिति' इति। आभिर्हि शोषदाहाप्लावप्रक्रियाभिस्तेजोमयः पुण्यात्मकः सकलपुरुषार्थसाधको निरस्तकिल्विषो देवताराधनयोग्यो दिव्यो देहः साधकेनावाप्यते। तत्र च प्राणप्रतिष्ठाविधिः सम्पादनीयो भवति।

**प्राणप्रतिष्ठा–**

आचम्य प्राणानायम्य जलमादाय संकल्पं कुर्यात्[3]– अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः, ऋग्यजुःसामानि च्छन्दांसि, जगत्सृष्टिकारिणी प्राणशक्तिर्देवता, आँ बीजं ह्रीं शक्तिः क्रौं कीलकं मम प्राणप्रतिष्ठापने विनियोग इति। एवं विनियोगं विधाय ततो न्यासान् विदधीय–

ब्रह्मविष्णुमहेश्वरऋषिभ्यो नमः शिरसि। ऋग्यजुःसामच्छन्दोभ्यो नमो मुखे। जगत्सुष्टि-कारिणीप्राणशक्तिदेवतायै नमो हृदये। आँ बीजाय नमो गुह्ये। ह्रीं शक्तये नमः पादयो। क्रौं कीलकाय नमः सर्वाङ्गे। ॐ अं कं खं गं घं ङं आं पृथिव्यप्तेजोवाय्वाकाशात्मने अङ्गुष्ठाभ्यां नमः। ॐ इं चं छं जं झं ञं ईं शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां नमः। ॐ उं टं ठं डं ढं णं ऊं त्वक्चक्षुःश्रोत्रजिह्वाघ्राणात्मने मध्यमाभ्यां नमः। ॐ एं तं थं दं नं ऐं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां नमः। ॐ ओं पं फं बं भं मं औं वचनादानगतिविसर्गानन्दात्मने कनिष्ठिकाभ्यां नमः।

---

1. सगर्भस्यास्य प्राणायामस्य बहवः प्रकारास्तन्त्रागमीयेषु योगपादेषु, योगशास्त्रेषु, पुराणेषु च वर्ण्यन्ते।
2. अथवा शोषणदाहनप्लावनभेदेन शोधिते देहे।
   पञ्चाशद्भिर्मात्राभेदैर्विधिवत् समायमेत् प्राणान्।। (11/24)
3. प्राणप्रतिष्ठाप्रकारोऽयं प्रयोजनान्तरमुद्दिश्य विध्यन्तरेण नित्याषोडशिकार्ण- वव्याख्यायामर्थरत्नावल्यां निर्दिष्टस्तत्रैव द्रष्टव्यः। पृ. 155। प्रपञ्चसारीये पञ्चत्रिंशे पटलेऽपि विधिरयं व्यावर्ण्यते।

अं यं रं लं वं शं षं सं अः मनोबुद्ध्यहङ्कारचचित्तविज्ञानात्मने करतलकरपृष्ठाभ्यां नमः। अनेनैव विधिना हृदयादिन्यासमपि कुर्यात्। तत आं नमो नाभ्यादिपादपर्यन्तम्, ह्रीं नमो हृदयादिनाभ्यन्तम्, क्रौं नमो भ्रूमध्यादिहृदन्तं विन्यस्य हृदये सप्तधातून् विन्यसेत्। तद्यथा- यं त्वगात्मने नमः, रं रक्तात्मने नमः, लं मांसात्मने नमः।, वं मेदसात्मने नमः, सं अस्थ्यात्मने नमः। षं मज्जात्मने नमः, शं शुक्रात्मने नम इति। ततो ह्रीं ओजसात्मने नमः। हूँ प्राणात्मने नमः, क्षं जीवात्मने नम इति हृदये विन्यस्य अं नमः, आं नमः इं नम इत्यादि क्षकारान्तं व्यापकं कुर्यात्।

ततः स्वहृदि पीठशक्तिं विन्यस्य ध्यात्वा मानसोपचारैः सम्पूज्य हृदि ज्ञानमुद्रया हस्तं दत्त्वा प्राणस्थापनं कुर्यात्। तद्यथा- आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं प्राणा इह प्राणाः। पुनः आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं जीव इह स्थितः। आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं सर्वेन्द्रियाणि इह स्थितानि। आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपादपाणिपायूस्थानीहैवागत्य सुखं चिरं तिष्ठन्तु नमः। ह्रीं क्षं हं सः ह्रीं ह्रीं इति प्राणप्रतिष्ठामन्त्रं त्रिवारं पठेत्। गर्भाधानादिसंस्कारसिद्ध्यर्थं षोडशावारं प्रणवं जपेत्। ततोऽनेन देहस्य गर्भाधानादिसंस्काराः सम्पद्यन्तम्, अयं मम देहोऽधुना सर्वकर्मारम्भयोग्यो जात इति ज्योतिर्मयं स्वशरीरं भावयेत्। ततः प्राणायामं कुर्यात्। तद्यथा- आकारादिषोडशस्वरानुच्चार्य वामनासिकया वायुं पूरयेत्, ककारादिपञ्चविंशतिवर्णानुच्चार्य कुम्भकेन वायुं स्थिरीकृर्यात्, यकारादिक्षकारान्तान् वर्णानुच्चार्य वायुं रेचयेदिति। एवं वारत्रयं कुर्यात्। प्राणायामस्यास्य माहात्म्यमेवं वर्ण्यते शास्त्रेषु-

**यथा पर्वतधातूनां दोषं दहति पावकः।**
**एवमन्तर्गतं पापं प्राणायामेन दह्यते।।[1] इति।।**

आभ्यां भूतशुद्धिप्राणप्रतिष्ठाभ्यामन्योन्यसंयुक्ताभ्यामनुष्ठानाभ्यामर्चकः प्रथमं स्वयमिष्टदेवमयो भूत्वा तदनु स्वेष्टदेवतां समाराधयते।

**त्रिविधा पूजा-**

तत्र बाह्या, आन्तरी चेति द्विविधा वरिवस्या तन्त्रशास्त्रेषु वर्ण्यते। तत्र बाह्यैः पुष्पधूपादिभिः स्वेष्टदेवतासमाराधनं बाह्यवरिवस्यापदेन, भावनाप्रवणेन चेतसा तस्याः समाराधनमान्तरवरिवस्यापदेन परिचीयते। कुलक्रमादिसम्प्रदायेषु स्वात्मदेवता समाराध्यते तत्तच्छास्त्रपद्धत्या। अयं चान्य एव प्रकारः पूजायाः। प्रकारत्रयमेतत्-

**तव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता।**
**परा चाप्यपरा गौरि तृतीया च परापरा।।**
**प्रथमाद्वैतभावस्था सर्वप्रसरगोचरा।**
**द्वितीया चक्रपूजा च सदा निष्पाद्यते मया।।**

1. दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्।। मनुस्मृतिः (6/71)

**एवं ज्ञानमये देवी तृतीया तु परापरा।**
**उत्तमा सा परा ज्ञेया . . . . .. . .॥**[1]

इत्येवं वर्ण्यते योगिनीहृदये परा–अपरा–परापराभेदेन। अत्र बाह्यपूजा अपरा, आन्तर वरिवस्या परा, स्वात्मदेवतासमाराधनं च परापरा पूजेति मन्तव्यम्।

अत्र पराया उत्तमत्वमुद्घोष्यते। शक्तिसंगमतन्त्रे च देव्याः पूजाविषयके प्रश्ने शिवः– 'विष्ठपूर्णे मुद्घटे हि बहिःशुद्धौ तु किं फलम्। अन्तःशुद्धिं समासाद्य बहिःशुद्धिं समाचरेत्॥[2]' अन्तःपूजां समासाद्य बहिःपूजां समाचरेत्।[3] इति निश्चिनोति। 'यद्यद् बाह्यं वक्ष्यमाणं तत्तदान्तरमाचरेत्' इति वचनं स्मरंश्च योगिनीहृदयदीपिकाकारः– 'एतेन बाह्यपूजां सर्वामप्यादावन्तः कुर्यादिति सूच्यते'[4] इति निष्कर्षयति। अत एव–

**न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथिताऽनिशम्।**
**स्वे महिम्न्यद्वये धाम्नि सा पूजा या परा स्थितिः॥**

इत्येतादृशानि वचनानि प्रवर्तन्ते। यतो हि–

**बालिकारचितवस्त्रपुत्रिकाक्रीडितेन सदृशं तदर्चनम्।**
**यत्र शाम्यति मनो न निर्मलस्फीतचिज्जलधिमध्यमाश्रितम्॥** इति॥

दिशा आन्तरवरिवस्यां विना निष्फलप्रायं भवति बाह्यामर्चनम्। अत शिवानन्दः– 'पूजा विश्वस्य वेद्यस्य चिद्भूमिविश्रान्तिः' इति पूजालक्षणं वक्ति। भट्टगङ्गाधरस्तोत्रप्रामाण्येन च धूपगन्धदीपनैवेद्यरहस्यं स्फोरयति। अत एव च– 'परमनिरावरणात्मनि रूपे यो दृढतरः परामर्शः। पूजनमेतदितीत्थं प्रभुणा निरणायि' इति पूजनलक्षणं महानयपद्धत्यां वर्ण्यते।

**ये ये भावा ह्लादिन इह दृश्याः सुभगसुन्दराकृतयः।**
**तेषामनुभवकाले स्वस्थितिपरिपोषणं सतामर्चा॥**

इति च वक्ति प्रशस्तिभूतिपादः। यतो हि–

**या या संविदुदारा यो योऽप्यानन्दसुन्दरो भावः।**
**जगति यदद्भुतरूपं तत्तद् देव्यास्तवाकारः॥**

इति नीत्या सर्वं देवीमयमेव।

---

1. योगिनीहृदये, 3/2–4
2. शक्तिसंगमतन्त्रे, 11/74–75
3. तत्रैव, 11/71
4. योगिनीहृदयदीपिकाकारः, 3/90

**योगो नान्यः क्रिया नान्या तत्त्वारूढा हि मतिः।**
**स्वचित्तवासनाशान्तौ सा क्रियेत्वभिधीयते॥**

इत्यागमशास्त्रवचनेऽपि क्रियापदं पूजनपरमेव प्रत्येयम्। तच्च परामेव पूजां निर्दिशतीति बाढं सिद्ध्यति परापूजाया उत्तमत्वम्। अतश्च अपरायाः परापरायाश्च पूजया योग्यतावाप्त्यर्थं पराया अभ्यासोऽतीवावश्यक इति विज्ञेयम्। अत्र च भूतशुद्धिप्राणप्रतिष्ठोरपि वर्तते विशिष्ठो विनियोग इति पूर्वोक्तेनानयोर्विवरणेनैव विद्वांसो विदाङ्कुर्वन्तु।

उपर्युद्धृते योगिनीहृदयवचने निर्दिष्टा बाह्यचक्रपूजाऽपराख्या बाह्यवरिवस्यापदेनाख्यायते। पञ्चभूतमयैर्गन्धपुष्पादिभिर्बाह्यार्चनमिति दीपिकाकारः ऋजुविमर्शिनीकारोऽपि प्रपञ्चसारप्रामाण्येनैषां लक्षणमाह। पञ्चोपचार-षोडशोपचारचतुष्षष्ट्युपचारादिभेदैर्बहुधेयं विस्तार्यते।

परापरा च पूजा- 'एवं ज्ञानमयो पूर्वोक्ताद्वैतभावनामये धाम्नि बाह्यस्य पृथगात्मकावरणार्चनरूपस्य कर्मणो ज्ञानमयताविश्रान्तिस्तृतीया परापरा पूजा।' तदुक्तमभियुक्तैः-

**प्रकाशैकघने धाम्नि विकल्पप्रसरादिकम्।**
**निक्षिपाम्यर्चनद्वारा वह्नाविव घृताहुतीः॥**

इत्येवं सप्रमाणं विवृतऽमृतसनन्देन। अत्र परायाः परापरायाश्च पूजाया भेदः सावधानं सूक्ष्मेक्षिकया हृदयङ्गमीकरणीयः। तत्राशुद्धविकल्पानां शोधनाय परापराख्या पूजा प्रवर्तते, पराख्यायां च पुचायां सर्वं शुद्धसंविन्मयमेव राजते।

एवं च- **'स्वात्मानं हि विहाय चेतनममुं कं पूजयेयुर्जडम्'**[1] इति ज्ञानेन्दुकौमुदीवचने,

**इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवता।**
**स्वभावेन समाराध्या ज्ञातुः सोऽयं महामखः॥**

इति मुख्याम्नायरहस्यविधिवचने, **'आनन्दप्रसरः पूजा'**, 'शिवशक्तिसमापत्त्या' इति त्रिकसारवचनयोः, **'अहो स्वादुरसः कोऽपि'** इति पूजनस्तोत्रवचने च परापराख्या पूजैव व्यावर्ण्यते।

**पूजान्तराणामत्रैवान्तर्भावः-**

महेश्वरानन्देन चारारावेत्यादिचिद्गगनचन्द्रिकाप्रामाण्येन चारो रावश्चरूर्मुद्रेति चतुर्विधा पूजा निर्दिष्टा। यथ हि- **'तत्र चारः समयाचारः।'** रावो विमर्शः। चरुः[2] प्रथमद्वितीयादिकम्। मुद्रा स्वात्मनः परमेश्वरत्वोपपादनाय स्वशरीरं प्रति कल्प्यमानः करचरणादिसन्निवेशविशेषो वेषधारणविशेषश्च। महतो

1. प्रतिमा-पट-चित्र-स्थण्डिल-तूरादिषु जडेषु द्रव्येषु मन्त्रमहिम्ना तदा भगवान् प्रतिष्ठापयितुं शक्यते, तदा कथं नाम चैतन्यभरितेऽस्मिन् मानवीय काये न तस्य प्रतिष्ठा स्यादिति वदन्तः कौलिकार्चाः, वज्रयानानुयायिनः, नाथयोगिनश्च- 'सर्वदेवमयः कायः' (15/604) इति तन्त्रालोकधृतलाकुलसिद्धान्तमनुसरन्तः स्वात्मदेवतामेव पूजयन्ति।

तु मुद्रा पर्यन्ततो राव एवान्तर्भवति। तत्र चतुर्ष्वपि पूजाक्रमेषु प्राधान्येन राव एवोपयुज्यते। अन्येषां तु पर्यन्ततस्तत्प्रयोजकतया परिग्रहणम्। तस्मात् स्वस्वरूपपरामर्श एव परम पूजा। अन्यत्तु गन्धपुष्पधूपदीपाद्याडम्बरमात्रमिति तात्पर्यार्थः इति। अत्र विमर्शात्मकस्य रावस्य परमत्वं महेश्वरानन्दो वक्ति। चारस्य मुद्रायाश्चापराख्यायां बाह्यपूजायाम्, चरोश्च परापरायां पूजायां समावेशः कर्तुं शक्यत इति पूजायास्त्रैविध्यवात्र पर्यन्ततः प्रतिफलति। बौद्धतन्त्रेष्वपि बाह्या, आध्यात्मिकी (मनोमयी), गुह्या चेति पूजायाः प्रकारत्रयं वर्ण्यते। तत्र बाह्याऽपरा, आध्यात्मिकी परा, गुह्यपूजा च परापरेति एकादशप्रकाराया वाऽनुत्तरपूजायाः, चतुर्ब्रह्मविहारभावनायाश्च[1] वर्तते आन्तरपरिशुद्धिः फलम्। एतेषां लक्षणस्वरूपादिकं साधनमालादिग्रन्थेभ्योऽधिगन्तुं शक्यते।[2] देवभावाधिगमाय चात्र निष्पन्नक्रमभावनाऽभ्यस्यते।

त्रिकदर्शनेषु किल आणव-शाक्त-शाम्भवाख्यास्त्रय उपायाः चतुर्थी चानुपायप्रक्रिया स्वस्वरूपप्रत्यभिज्ञानसाधनतयोपवर्ण्यन्ते। तेषामप्यत्रैवान्तर्भावः कर्तुं शक्यते। तथाहि- केषाञ्चनाणवोपायानामपरायामन्येषां च परापरायाम्, शाक्तोपायस्य परापरायाम्, शाम्भवोपायस्यानुपायप्रक्रियायाश्च परायां समावेश इति। आणवोपायेषु केषुचित् प्राणचक्राद्यान्तरसाधनानां समुपयोगो भवति, शाक्तोपाये शाम्भवोपाये च क्वचन स्वात्मदेवताप्रीयते ललनामद्यमांसानि स्वीक्रियन्त इति तेषां परापराख्यायां पूजायामेव समावेशो भवितुमर्हति, न परायाम्। शाम्भवोपायपर्यन्तावस्थायामनुपायप्रक्रियायां च प्रविष्टो योगी प्रातिभज्ञानमन्तरा न किमपि बाह्यमान्तरं वा साधनमपेक्षत इति सत्यं तथाविधायां शाम्भवोपायप्रक्रियायामनुपायप्रक्रियायां च परा पूजा निष्पाद्यते। उपायचतुष्टयं चास्माभिरन्यत्र[3] विवृतमिति नात्र पुनःप्रयत्यते। केवलं पूजात्रयमेव यथाशास्त्रं नातिविस्तरेण वर्ण्यते।

अपरा पूजा-

स्थानप्रकल्पनाख्यमाणवोपायं वर्णयताऽभिनवगुप्तेन तन्त्रालोके-

**स्थानभेदस्त्रिधा प्रोक्तः प्राणे देहे बहिस्तथा।**
**प्राणश्च पञ्चधा देहे द्विधा बाह्यान्तरत्वतः॥**

**मण्डलं स्थण्डिलं पात्रमक्षसूत्रं सपुस्तकम्।**
**लिङ्गं तूरं पटः पुस्तं प्रतिमा मूर्तिरेव च॥**
**इत्येकादशधा बाह्यं पुनस्तद्बहुधा भवेत्।[4] इति**

---

1 मद्यमांसादिकमित्यर्थः।

2 मैत्री-करुणा-मुदिता-उपेक्षाख्याश्चत्वारो भावा अत्र चतुर्ब्रह्मविहारपदेनोक्ताः। ते च- 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' (1/33) इत्यस्मिन् पातञ्जलीय योगसूत्रे, 'मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यानि च सत्त्व-गुणाधिक-क्लिश्यमान-अविनयेषु' (7/12) इति जैनदर्शनीये तत्त्वार्थसूत्रेऽपि च वर्ण्यन्ते।

3 बौद्धतन्त्रवर्णिता त्रिविधा पूजाऽत्रापि पृ. 76-77 संक्षेपेण द्रष्टुं शक्यते।

4 विज्ञानभैरवीये उपोद्घाते, द्वितीये सेस्करणे, 15-20 पृष्ठानि द्रष्टव्यानि।

अत्र- ''पुस्तं लेपादिनिर्मिताकृतिः। मूर्तिर्गुर्वादिसम्बन्धिनी'' इति तत्रैव जयरथः। तत्रोपरि वर्णितेष्वकादशस्थानेषु स्वेष्टदेवता प्रतिष्ठाप्य बाह्यैरेव पुष्पादिभिः कृतं समाराधनपरा पूजा। 'स्थण्डिलादुत्तरं तूरं तूरादुत्तरतः पटः' इति सिद्धयोगीश्वरीमते स्थण्डिलतूरपटानामुत्तरोत्तरं वैशिष्ट्यं प्रदर्श्यते। अत्रापि जयरथः-

**स्थण्डिलं यागार्थं गृहीतो भूप्रदेशः।**
**तूरं पात्रादावुत्कीर्ण आधारविशेषः।।**

इत्येवं स्थण्डिलतूरशब्दौ व्याख्याति। तूरलक्षणं च सविधानं सिद्धातन्त्रतः संगृहीतं लुप्तागमसंग्रहे द्रष्टव्यम्। 'मण्डलं सारमुक्तं हि मण्डश्रुत्या शिवाह्वयम्' इत्यत्र मण्डलपदनिर्वचनं प्रदर्श्यते। 'मण्डलमिति मण्डं शिवाह्वयं सारं लातीत्यर्थः' इति च तत्र जयरथः। अस्मिन् प्रसङ्गे- 'सर्वार्चनं स्थण्डिले स्यान्न च तत्राधिवासनम्' इति हंसपारमेश्वरवचनम्, 'अन्तर्लिङ्गं दृढं बद्ध्वा बहिर्लिङ्गं प्रपूजयेत्' इति सिद्धान्तवचनम् चस्मरणार्हम्।

लुप्तागमसंग्रहस्य द्वयोरपि भागयोः संगृहीतेषु वचनेषु बाह्यार्चनसंबद्धा नैके विषयाः प्रतिपाद्यन्ते। दशदिपालपूजनेऽष्टदिक्षु तावदष्टो दिक्पालाः पूज्यन्ते मण्डलादिषु। नवमदशमयोस्तु पूजनस्थानं कुत्रेति समस्या-

**इन्द्रेशानदिशोर्मध्ये स्थानमन्यत् प्रकीर्तितम्।**
**नैर्ऋताम्बुदिशोर्मध्ये स्थानमन्यत् प्रकीर्तितम्।।[1] इति।।**

तत्त्वविमर्शिनीश्लोकेन समाधीयते। इन्द्रेशानदिशोर्मध्ये गगनाधिपस्य, नैर्ऋताम्बुदिशोर्मध्ये च पातालाधिपस्य पूजनं विधेयमिति तेन ज्ञायते। इन्द्रदिगत्र पूर्वा, अम्बुदिक् च पश्चिमा। 'ततो मूले उत्तरतः' इति त्रिशिरोभैरववचने नन्दिरुद्रगङ्गायमुनादीनां पूजनस्थानं निर्दिश्यते। एवमेव द्वारदेवताक्रमस्त्रिशिरोमते वामसिद्धान्तमतयोश्च प्रतिपादितः स्वच्छन्दोद्योते वर्ण्यते। पराख्यसंहितायां पञ्चगव्यविधानं दृश्यते। स्वच्छन्दतन्त्रवदेव सात्वसंहितायामपि पञ्चगव्यसंस्कारोऽवधानार्हः। अत्रत्यं भाष्यमपि द्रष्टव्यम्।

सिद्धान्तशैवपद्धत्या स्नानासनसन्ध्यातर्पणन्यासमुद्रादेहशुद्धिभूपरिग्रहाधिवासमण्डपार्घ्यपात्रसाध्य-मन्त्रजपपूजाऽग्निकार्यादिविचारः किरण-निःश्वासोत्तर-पौष्कर-मतङ्ग-मयसंग्रह-रौरव- स्वायम्भुवादिवचनेषु द्रष्टं शक्यते। शैवाद्यागमेषु क्रियाचर्यापादयोर्वर्तते बाह्यार्चनस्य महान् विस्तरः। पाशुपतीये पञ्चार्थप्रमाणे घोरमन्त्रव्याख्यानप्रसङ्गे- 'नमस्कारः परित्यागः कार्यकारणलक्षणः' इति नमस्कारलक्षणं प्रदर्श्यते। वेदव्रतानि महायज्ञाश्च यज्ञसूत्रवचनयोः, अष्टाचत्वारिंशत्संस्कारसश्च प्रायः सर्वेष्वागमेषु केषुचित् स्मृतिग्रन्थेषु च द्रष्टुं शक्यन्ते। बाह्यार्चनरूपो विषयोऽयं परशुरामकल्पसूत्रद्वितीयसंस्करणपरिशिष्टे 386-395,428-541, पृष्ठेषु वितानित इति तत्रैवावलोकनीयः।

---

1 तन्त्रालोके, 27/45-46

2 भा.3, पृ. 36

**परा पूजा–**

क्रमवासनावचनेष्वान्तरयजनपद्धत्या शोषण-करशुद्धि-उन्मज्जनानां स्वरूपं निदर्श्यते। ग्रन्थोऽयं साम्प्रतं सुभगोदयवासनानाम्ना मुद्रित उपलभ्यते। सम्पूर्णेऽस्मिन् ग्रन्थे चिद्विलासस्तवे च वासनामयी बाह्याभ्यन्तरपुष्पप्राणाद्यनपेक्षिणी सेयमान्तरवरिवस्या स्वे महिमन्यद्वये धाम्नि प्रतिष्ठापनप्रवणा प्रदर्श्यते। ज्ञानदीपविमर्शिन्यामधुनावध्यप्रकाशितायां सन्ध्यासूर्योपस्थानादिप्रकरणेषु सर्वेषु बाह्या आन्तराश्चोपचारा वर्ण्यन्ते। तेषां स्वरूपमुदयाकरपद्धतिवचनेष्वपि द्रष्टुं शक्यते। विज्ञानभैरवस्य प्रारम्भिकेष्वन्तिमेषु च श्लोकेषु, विशेषतो धारणाप्रतिपादकेषु श्लोकेषु चानुपायप्रक्रियामुखेन परा पूजा विवृता। गीतानिष्यन्दे, भट्टनायकस्तोत्रे, पूर्वतन्त्रे च जय-यजन-लिङ्गादिपदानां तादृश एवार्थः स्फोर्यते।

प्रकाशविमर्शात्मकं सचराचरं जगदिति किल प्रत्यभिज्ञादर्शनप्रतिपादितः पन्थाः। प्रकाशविमर्शयोश्च चन्द्रचन्द्रिकायोरिवाभेद इति सत्यमद्वयप्रकाशविमर्शात्मकमेव सर्वम्। तमेनं सिद्धान्तं त्रैपुरसम्प्रदायमनुसरन्तोऽप्यङ्गीकुर्वन्ति। अत्र पूजापूजकयोः पूजाद्रव्याणां च वस्तुतोऽभावात् प्रकाशविमर्शात्मकमिदं तत्त्वं भावोपहारैरेव पूज्यते। इयमेव परा पूजा। निस्त्रैगुण्ये पथि विचारद्भिरेषा सम्पाद्यते। योगिनीहृदये तस्याः स्वरूपमेवमुपवर्ण्यते–

**महापद्मवनान्तःस्थे वाग्भवे गुरुपादुकाम्।**
**आप्यायितजगद्रूपां परमामुतवर्षिणीम्॥**

**संचिन्त्य परमाद्वैतभावनामदघूर्णितः।**
**दहरान्तरसंसर्पन्नादालोकनतत्परः॥**

**विकल्परूपसंजल्पविमुखोऽन्तर्मुखः सदा।**
**चित्कलोल्लासदलितसंकोचस्त्वतिसुन्दरः॥ इति॥**

अस्यार्थस्तट्टीकायां दीपिकायामवलोकनीयः। प्रकाशविमर्शात्मककामेश्वरकामेश्वरीमिथुनस्वरूपमिदं तत्प्रतीकभूतेऽद्वयात्मके महाबिन्दौ प्रकाशपरमार्थे प्रसारपरमार्थे च कामकलारूपेण समारूढमेवमेव समाराध्यते।

अपरपूजाविवरणारम्भेऽत्र स्थानभेद इत्यादिकः श्लोकस्तन्त्रालोकीयः समुद्धृतः। तत्र बाह्येष्वेकादशस्थानेषु यथा पूजा निष्पाद्यते, तथैव प्राणे देहे च सा निष्पाद्येति प्रोच्यते। एकादशबाह्यस्थानानि तत्रैव परिगणितानि, टिप्पण्यां चापि वचनान्तरेण तानि प्रदर्शितानि। देहे बाह्याभ्यन्तरभेदेन द्विधा पूजा सम्पाद्यते। तन्त्रान्तरेषु मूलाधारादिस्थानेषु कुण्डलिनीशक्तिजागरणमुखेन भाव्यमाना आन्तरी, बाह्येषु हृदयादिषु षडङ्गन्यास- करन्यास-मुद्राबन्ध-मुद्रा-विरचनादिरूपेण सम्पाद्यमाना बाह्या, शरीरस्थैर्बाह्येरान्तरैश्च द्रव्यैः सम्पाद्यमाना गुह्येति ज्ञेयम्। क्रमश आसां परायाम्, अपरायाम्, परापरायां च पूजायामन्तर्भावो विधेयः। प्राणस्तावत् पञ्चधा–

**हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले।**
**उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः॥**

इत्यादिसरण्या शरीरस्य विभिन्नेष्ववयवेषु सरति, श्वासप्रश्वासरूपेण चान्तर्बहिश्चरति। तन्त्रान्तर्बहिश्चरतः श्वासप्रश्वासानवलम्ब्य योगिनीऽजपाजपविधिं सम्पादयन्ति, शरीरान्तःसरतः प्राणानालम्ब्य च कालोदय-वर्णोदय-चक्रोदयान् भावयन्ति। तत्रभवानभिनवगुप्तः- 'कालाध्वा प्राणे स्पष्टं प्रतिष्ठितः' इत्यादिना षष्ठे सप्तमे चाह्निके तानेतान् कालोदयादिप्रकारान् वर्णयति। बौद्धे कालचक्रतन्त्रेऽपि प्रकारोऽयं सविशेषं निरूप्यते। परायामेव पूजायामस्याप्यन्तर्भावो मन्तव्यः। अजपाजपोऽपि पराया एव पूजाया विशिष्टः प्रकार इति विभावनीयम्।

**परापरा पूजा-**

'इन्द्रियप्रीणनद्रव्यैर्विहितस्वात्मपूजनः' इति योगिनीहृदयवचने च परापरायाः पूजाया विधानमवगन्तव्यम्, न परायाः। यतो हि स्वात्मदेवतायाः पूजार्थमत्र इन्द्रियप्रीणनानि बाह्यानि देहस्थानि वा द्रव्याण्युपादीयन्ते। अनन्तवासनामलिनितं हि चेतो विपथं धावति। विकल्पशोधनमन्तरा तस्य शुद्धिर्दुःशकेति वामकुलक्रमत्रिकादिषु वज्रयानतन्त्रेषु च स्वात्मदेवताप्रीणनप्रवणा अपूर्वा काचन पूजापद्धतिराविष्कृता, या हि सममेव पतनाय च समुन्नतये च प्रभवति। इन्द्रियप्रीणनमुखेन भावान् शोधयन्ती सा कल्याणाय कल्पेत, विषयानुरागं वर्धयन्ती च पापाय। यदाह योगभाष्यकारः- 'चित्तनदी नाम उभयतोवाहिनी। वहति कल्याणाय वहति पापाय च' इति।

तन्त्रालोके पञ्चदशाह्निके ऊनत्रिंशाह्निके च नानाग्रन्थप्रामाण्येन क्रमशो वामाचारप्रधानः कुलप्रक्रियाप्रवणश्च परापराख्यः पूजाविधिरेव प्रधानतया विवेचितः। कुलप्रक्रियायां वज्रयानग्रन्थेषु च पञ्चरत्न-प्रञ्चप्रदीप-पञ्चामृतपदाभिलप्यानि द्रव्याणि देहस्थानि पूजोपादानतया परिगृह्यन्ते। तन्त्रालोकविवेके-

**रेतो हराम्बु पुष्पं च क्षारं नालाज्यकं तथा।**
**पौरुषं क्ष्माभवं छागं मीनजं शाकुनीयकम्॥**
**पलाण्डुं लशुनं चैव द्रव्यद्वादशकं शुभम्॥**[1]

इत्यत्र द्रव्यद्वादशकम्,

**देहस्थं च चरुं वक्ष्ये यत्सुरैरपि दुर्लभम्।**
**शिवाम्बु रेतो रक्तं च नालाज्यं विश्वनिर्गमः॥**[2]

इत्यत्र च रत्नपञ्चकं निदर्शितम्। अत्र एकादशं द्वादशं च द्रव्यं विहाय शिष्टानि द्रव्याणि वज्रयानग्रन्थेषु पञ्चामृत-पञ्चप्रदीपाभिख्यया समुपात्तानि। देहस्थद्रव्येषु तेषां परिगणनं भवति। एभिः

1. तन्त्रालोकविवेकः, 29/17
2. तत्रैव, 29/200

सम्पाद्यमाना गृह्यपूजैव[2] परापराख्याऽभिधीयते। गच्छत कालेनान्तरेषु देहस्थेषु द्रव्येषु 'नन्दहेतुफलैर्द्रव्यैरर्घ्यपात्रं प्रपूरयेत्'[3] इति तन्त्रालोकदिशा कुण्डगोलकाख्यं द्रव्यद्वयमेव परिगृहीतमभूत्। त्रैपुरे सम्प्रदाय आन्तरदेहस्थद्रव्याणां परिष्कृतं स्वरूपमेवाङ्गीकृतमभूदिति योगिनीहृदयादिग्रन्थानामलोकनेन स्फुटीभवति।

**उपसंहारः-**

एवमत्र कथं नाम साधको देवस्वरूपो भूत्वा देवयजनसमर्थो भवितुमर्हतीति प्रश्नस्य समाधानमुखेन भूतशुद्धिप्राणप्रतिष्ठयोर्विधिः, देवयजनाख्यायाः पूजायास्त्रैविध्यं च व्यावर्णितम्। अत्र भागद्वयात्मके लुप्तागमसंग्रहे संकलितानि नानाविधानां ग्रन्थग्रन्थकाराणां वचनान्येव प्रमाणत्वेन तेषां वचनानामनिर्दिष्टान्याकरस्थलानि तत्साहाय्येन ज्ञातुं शक्यन्ते। इदं चात्रावधेयं यत् परापूजायां भूतशुद्धिप्राणप्रतिष्ठयोरपेक्षा नास्ति, अपरायां परापरायां चैव वर्तते तयोरपेक्षा। यदाऽपरया पूजया चक्रादिषु स्वेष्टदेवतायाः पूजकः 'स्वानुभूतसंवित्स्वभावमकृत्रिमाहंपरामर्शमयं भगवद्रूपं बहिरिदन्तयोल्लास्य चक्रे-

**निजनिजेषु पदेषु पतन्त्विमाः करणवृत्तय उल्लसिता मम।**
**क्षणमपीश मनागपि मैव भूत् त्वदविभेदरसक्षतिसाहसम्॥**[4]

इति श्रीरहस्यगुरूक्तरीत्या[5] भेदेन क्षणपरिभावितमस्मत्प्रमादं क्षमस्व' इति शिवानन्दव्याख्यानपद्धत्या क्षमां याचते, तदा परायां पूजायां भावोपहाराणि समर्पयतः साधकस्य कथैव का? एवं च परायां पूजायां तस्या उपर्युक्तासु विविधासु प्रथासु च प्रकारान्तरेण भूतशुद्धिप्राणप्रतिष्ठयोर्विधानमेवान्तर्निगूढमिति वक्तुं शक्यत इति सुष्ठूक्तम्- **'अन्तःशुद्धिं समासाद्य बहिःशुद्धिं समाचरेत्'** इति 'बाह्यपूजां सर्वामप्यादावन्तः कुर्यात्' इति च। अपरायाः पूजाया अपेक्षयाऽपि परापरायाः प्रारम्भे तु नूनं नितान्तमपेक्षिता सा भावद्रव्यादिशोधनाय। अत एव परायाः पूजाया उत्तमत्वमुद्घोष्यते। देशकालधर्मजात्यादिगतान् भेदान् दमयन्ती पूजा सर्वोत्तमेत्यत्र को नाम दार्शनिक आस्तिको नास्तिको वा, आधुनिकान् नानाविधान् वादान् रुढिवादप्रगतिवादादीनां प्रतिनिधीनाङ्गीकुर्वाणो वा विवदेत? इति सत्यं सुष्ठूक्तं **'देवो भूत्वा यजेद् देवानिति'** शम्॥

---

1. निगमागमीयं संस्कृतदर्शनम्, पृ. 66-78
2. तन्त्रालोके, 29/22
3. शिवस्तोत्रावली, 8/5
4. नित्यषोडशीकार्णवः पृ. 142

ISSN - 0974-8946 **शोधप्रभा**
जुलाई-सितम्बर, 2017 वर्षः 42, तृतीयोऽङ्कः

# सरूपाणामेकशेष-एकविभक्तौ इत्यत्र एकशेषविचारः

**डॉ. रामनारायणद्विवेदी***

पाणिन्यष्टाध्याय्याः प्रथमाध्यायस्य सूत्रं वर्तते "सरूपाणामेकशेष एकविभक्तौ"[1] इति। यदा प्रातिपदिकार्थगतं द्वित्वं बहुत्वं वा वक्तुः विवक्षितं तदा प्रातिपदिकस्य द्विः त्रिर्वा प्रयोगस्य प्राप्तौ सूत्रमिदमारभ्यते। एकविभक्तावित्यस्य सरूपाणामित्यत्रान्वयः। "वृद्धो यूना तल्लक्षणश्चेदेव विशेषः"[2] इति सूत्रादेवकारोऽपकृष्यते। तथा च एकविभक्तौ परतः सरूपाणामेव एकः शिष्यते इत्यर्थः पर्यवस्यति। सरूपाणामित्यत्र सरूपाश्च सरूपाश्चेति सरूपाः तेषामित्यर्थो बोध्यः। अत्र केचित् वाक्यापरिसमाप्तिन्यायेन स्वाङ्गे स्वव्यापारायोग इति वर्णयन्ति तन्न उद्देश्यतावच्छेदकावच्छिन्नाक्रान्तया स्वस्य स्वाङ्गेऽपि प्रवृत्तिसत्त्वात्, अन्यथा "तुल्यास्यप्रयत्नं सवर्णम्"[3] इत्यत्र सवर्णदीर्घः, "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्"[4] इति सूत्रघटकानां प्रातिपदिकत्वम्, "प्रत्ययः"[5] इत्यत्र सुप्रत्ययादिकं न सिद्ध्येत्। न च सरूपाणामेक एकविभक्तौ इत्येव सूत्रं स्यात् तथा सति सरूपाणां स्थाने एक आदेशः भविष्यति तेन च लक्ष्यसिद्धिरिति वाच्यम्, तथा सति अश्वश्चाश्वश्चेत्युदात्तद्वयवतः स्थाने उदात्तद्वयक आदेशः प्रसज्येत, एकस्य शेषः इति स्वीकारे तु नोक्तदोष इति बोद्धव्यम्। अयं चैकशेषः द्वन्द्वापवादः अर्थात् अपवाद इवापवादः। यद्येतन्नारभ्येत तर्हि प्रत्येकं विभक्तिः स्यात्, द्वन्द्वश्च प्रवर्तेत, आरब्धे त्वेकशेषेऽनेकसुबन्तविरहात् द्वन्द्वस्य प्राप्तिरेव नेति भावः। न च परिच्छेतृजननीवाचिनोः मातृशब्दयोः औजसादिषु वैरुप्यात् एकशेषाभावेऽपि पयः पयो नयति देवदेवः इत्यादौ वैकशेषापत्तिः स्यादिति वाच्यम्, सहविवक्षायामेव एकशेषस्य प्रवृत्तेः नोक्तदोषः। अत्र च "इदितो नुम् धातोः"[6] इति लिङ्गम्। इत् इकार इत्संज्ञको यस्य स इदित् अत्र इच्छब्दयोरेकविभक्तौ सारूप्येऽपि द्वन्द्वविषयत्वस्याभावादेकशेषो न प्रवर्तते।

अयं चैकशेषोऽनैमित्तिकत्वेनान्तरङ्गत्वात् सुबुत्पत्तेः प्रागेव प्रवर्तते। न च सुबुत्पत्तेः पूर्वमेव एकशेषशास्त्रप्रवृत्तौ शिष्यमाणं प्रातिपदिकमेकमेवार्थं बोधयेत्, तथा च द्विवचनबहुवचनादीनामनुत्पत्तिरिति वाच्यं, यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन शिष्यमाणप्रातिपदिकादेव द्विवचनबहुवचनादेरुत्पत्तावदोषात्। अत एवैकशेषो वृत्तिषु गण्यते, परार्थाभिधानं च वृत्तिः।

---

* सहाचार्यः, श्रीलालबहादुरशास्त्रिराष्ट्रीयसंस्कृतविद्यापीठम्, नवदेहली-16

1. पा.सू.1.2.64
2. पा.सू.1.2.65
3. पा.सू.1.1.9
4. पा.सू.1.2.45
5. पा.सू.3.1.1
6. पा.सू.7.1.58

सूत्रस्यास्यार्थविशेषबोधोऽत्र समुपस्थाप्यते तथाहि - शास्त्रे व्यक्तिपक्षः जातिपक्षश्च वर्तेते जातिपक्षो यथा तत्तत्पदार्थासाधारणो धर्मः जातिः तेन अभावत्वाकाशत्वादीनां नित्यानेकसमवेत्तवरूपजात्तिवाभावे अपि न क्षतिः एतस्यैव शास्त्रे स्वार्थपदेन व्यवहारः। त्तप्रवृत्तिनिमित्तमपि कथ्यते प्रवृत्तिनिमित्तत्वं च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वं, घटस्य प्रवृत्तिनिमित्त घटत्वं घटत्वरूपे घटशब्दस्य प्रवृत्तिनिमित्ते वाच्यत्वस्य वाच्यो यो घटः तद्वृत्तित्वस्य समवायेन घटत्वविशिष्टघटोपस्थितौ उपस्थितीयप्रकारतावत्वस्य च सत्वेन लक्षणसमन्वयः। नन्वेवमपि घटशब्देन पुंस्त्वोपस्थितौ पुंस्त्वे अतिव्याप्तिरिति चेद् न, प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वमिति परिष्कारेणादोषात्। [1]वैशिष्ट्यं च स्ववाच्यत्वस्ववाच्यवृत्तित्वस्वजन्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविशेष्यतानिरूपित-प्रकारताश्रयत्वैतत्त्रितयसम्बन्धेन। निरूपित्तवं च साक्षात् परम्परासाधारणम्। पुंस्त्वत्वे तृतीय-सम्बन्धाभावान्नातिव्याप्तिः, 'पुंस्त्वविशिष्टो घटः इत्येव बोधात्। जातेः पदार्थत्वे मानं तु [2]जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् इति सूत्रं सवर्णेऽण्ग्रहणमपरिभाव्यम्, आकृतिग्रहणात् सिद्धम् इति वार्तिकम्, आकृतिं वाजप्यायनः इति सरूपसूत्रस्थं भाष्यम्। तत्र पदानां जातौ शक्तिरपि एकैव स्यात् इति लाघवम्। व्यक्तौ शक्तौ व्यक्तीनामनन्तत्वात् शक्तेरपि आनन्त्यम्। जातौ शक्तेः शक्यतावच्छेदकस्य घटत्वादेः लाघवम्, न च जातिशक्तिवादेऽपि गोपदस्य गोत्वावच्छिन्ने शक्तौ गोत्वं शक्यतावच्छेदकं वाच्यम्। गोत्वं च गवेतरासमवेत्तवे सति सकलगोसमवेत्तवं तथा च व्यक्त्याद्यनेकपदार्थघटित्तया अतिगौरवमिति वाच्यं तादात्म्येन गोत्वरूपायाः जातेरेव शक्यतावच्छेदकत्वात् शब्दार्थयोस्तादात्म्यस्वीकारे शब्दगतजातेः गोत्वत्वस्य अखण्डधर्मरूपत्वस्य स्वीकारेण तस्यैवावच्छेदकत्वे गौरवाभावात्। एवमेव जातेः शक्यत्वे शक्तिनिरूपिकायाः जातैरैक्येन शक्तेरेकत्वं जातिपक्षे [3]प्रत्युच्चारणं शब्दाः भिद्यन्ते इति न्यायेन शब्दभेदो न प्राप्नोति अतः सरूपसूत्रं नात्यन्तावश्यकम्। व्यक्तिपक्षे तु प्रत्युच्चारणं शब्दाः भिद्यन्ते इति भाष्योक्त्या उच्चारणभेदेन शब्दभेदप्राप्तौ सरूपसूत्रम् आवश्यकं तद्यथा दशरथापत्यरूपः रामः एकः परशुरामः द्वितीयः, बलरामः तृतीयः, तेन रामत्रयबोधनाय रामशब्दत्रयप्रयोगे प्राप्ते सरूपसूत्रमेकशब्दप्रयोगप्राप्त्यर्थ सूत्रमिदमावश्यकम्। यः शिष्यते स लुप्यमानार्थाभिधायि इति न्यायेन शिष्यमाणेन एकेनैव सर्वार्थबोधकत्वात् इति सरूपसूत्रस्याभिप्रायः।

इदानीं सरूपसूत्रं विमृश्यते सरूपाणाम् इति हि यस्य च भावेन भावलक्षणमिति सूत्रेण निर्धारणार्थिका षष्ठी निर्धारणषष्ठी प्रकृत्यर्थस्य च [4]स्वघटकत्वस्वघटकनिर्धार्यमाणेतरावृप्तिधर्म-वत्वोभयसम्बन्धेन निर्धार्यमाणेन्वयो भवति। यथा नृणां द्विजः श्रेष्ठः इत्यत्र निर्धारणषष्ठी। प्रकृतिनृपदार्थस्यनृत्वावच्छिन्नसमुदायस्य निर्धार्यमाणे द्विजपदार्थे स्व (नृसमुदाय) घटकत्वसम्बन्धेन, स्व-घटकनिर्धार्यमाणद्विजेतरावृत्तिश्रेष्ठत्वधर्मवत्वसम्बन्धेन चान्वयो भवति। अत एव नृणां गजः स्थूलः

1. लघु.श.शे.का.प्र.
2. सि.कौ.का.प्र.
3. म.भा.प्र.
4. ल.श.शे.सरूपसूत्रे

इति न प्रयोगः गजस्य स्वघटकत्वाभावात, एवं नृणां द्विजः प्रमेयः, नृणां ब्राह्मणः प्राणी इत्यादय अपि न प्रयोगाः। स्वघटकनिर्धार्यमाणब्राह्मणेतरशूद्रादिवृत्तित्वस्यैव प्रमेयत्वप्राणित्वादिधर्मेषु सत्वेन तद्वृत्तिधर्मवत्वाभावात्, एवं च स्वरूपपदोत्तरषष्ठ्याऽपि निर्धारणविभक्तित्वेन पूर्वोक्तसम्बन्धाभ्यामेव त्तप्रकृत्यर्थस्य निर्धार्यमाणे एकत्वावच्छिन्ने अन्वयो वाच्यः, स च न सम्भवति स्वघटक-निर्धार्यमाणैकत्वावच्छिन्नेतरस्याप्रसिद्धेः एकत्वस्य केवलान्वयित्वेन सर्वत्र सत्वादिति चेदत्र ब्रूमः, प्रथमार्थकैकशब्दस्यैवात्रग्रहणेन तादृशसम्बन्धाभ्यां सरूपपदार्थस्य निर्धार्यमाणेऽन्वयस्य सम्भवेन दोषाभावात्, एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथेत्यभियुक्तोक्तेरेकशब्दस्य प्रथमार्थकतायाः प्रसिद्धत्वादिति मान्याः अत्र [1]वृद्धो यूना तल्लक्षणश्चेदेव विशेषः इत्यतः एवकारः अपकृष्यते तत्र एवकारस्य कुत्रान्वयः इति चिन्त्यते। तत्र न तावदपकृष्टैवकारः सारूप्यवदारब्धसमुदायघटकानामित्यनन्तरं योजयितुं शक्यः। सारूप्यवदारब्धसमुदायघटकानामेवैकः शिष्यत इति उच्यमाने एवपदवैयर्थ्यापत्तेः। नापि सारूप्यवदारब्धसमुदायानन्तरन्तथा, सारूप्यवदारब्धसमुदायमात्रघटकेत्यादिरीत्योच्यमानेऽपि एवपद-वैयर्थ्यानिरासात्। नापि सारूप्यवन्मात्रेत्यादिरीत्या सारूप्यवदित्यनन्तरं योजयितुं शक्यते जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोः समुदायस्यापि मातृभ्यामित्येवं सारूप्यस्य भ्यामादौ सत्वात्सारूप्यवन्मातृ-मातृशब्दारब्धसमुदायत्वादेकशेषापत्तेः। नापि सरूपपदार्थैकदेशे सारूप्ये सारूप्यमात्रवदारब्धेत्यादिरित्या एवार्थान्वयः शक्यते कर्तुम्। मृगीवाचकहरिणीशब्दस्य, वर्णवाचकहरिणीशब्दस्य च तद्धितादौ वैरूप्यसत्वेन सारूप्यमात्रवद्विरहेण हरिणीहरिणी इति समुदाये सारूप्यमात्रवदारब्धत्वस्याभावेन तयोरेकशेषानापत्तेरिति चेन्नैवम्। विभक्तौ परतः सारूप्यमेव येषां दृष्टं तेषामेकः शिष्यत इति सूत्रार्थकरणेनादोषात्। तथा च हरिणीशब्दयोर्विभक्तौ औजसादिषु एकशेषः सिद्ध्यति, मातृशब्दयोस्तु औजसादिषु वैरूप्यस्य दर्शनान्नैकशेष इति सरूपाणामेकशेष एकविभक्तौ अत्र विभक्तौ इति श्रूयते तत्र सप्तम्याः निमित्तत्वमर्थः तस्य कुत्रान्वयः इति चिन्त्यते तथा हि सारूप्यं किं विभक्तित्वावच्छेदेन (यावद्विभक्तिषु) विवक्षितम्? विभक्तित्वसामानाधिकरण्येन (यत्किंचिद्विभक्तौ) वा विवक्षितम्? आद्ये नित्यबहुवचनान्तदारशब्दस्य सर्ववचनान्तस्य दारशब्दस्य चैकशेषानापत्तिः यावद्विभक्तेरेव तत्राभावात्। अन्त्ये - मातृशब्दयोरपि सारूप्यादेकशेषापत्तिरिति चेन्न समानार्थकैकग्रहणात् दारशब्दे समानविभक्तौ जसादौ सारूप्यादेकशेषोपपत्तेः मातृशब्दे च औजसादौ, मातारौ, मातरौ इत्यादिवैरूप्यादेकशेषापत्तेरभावाच्च दोषलेशविरहात्।

नन्वेवमपि सर्वशब्दयोरेकशेषानापत्तिः सर्वस्मै सर्वायेत्येवं तयोर्वैरूप्यदर्शनादिति चेन्न इष्टापत्तेरिति केचित्। सरूपाणामेकशेष एकविभक्तौ इति सूत्रे। एवकारापकर्षः प्रसिद्धः तद्विषये किञ्चिदुच्यते परे तु एवकारापकर्षे न मानम्। अत एव प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः माता च जनयित्री, माता च परिच्छेत्ता, उभयोरपि क्वचित् सारूप्यं दृश्यते इति प्रातिपदिकैकशेषकल्पे एवं शंका कृता, न तु विभक्त्यन्तैकशेषादिकल्पे भाष्ये। अन्यथा तस्मिन्कल्प इव तेष्वपि कल्पेषु मातृमात्रोः प्रतिषेधो वक्तव्य इति वचनमारब्धं स्यात्। अत एव किमुच्यते प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्य इति न पुनरन्यस्यापि विभक्त्यन्तानामेकशेषः तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात् तस्यापि

1. सि.कौ.एकशेषप्र.

ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि मातृभ्यां च मातृभ्यां चेति। अथ मतमेत् विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेणेति प्रातिपदिकानामेकशेषे दोषो भवतीति भाष्यं संगच्छते। अन्यथा एकस्यैव सूत्रस्य व्याख्याभेदेन एकस्यैव लक्ष्यस्य साधुत्वमसाधुत्वं च स्यात्। एतद्भाष्यैकवाक्यतया- मातृमात्रो: प्रतिषेधो वक्तव्य इति सामान्यत आरब्धमपि वार्तिकम् - सर्वनामस्थानविभक्तिपरत्वविषयकं बोध्यम्। अन्यथा विभक्त्यन्तैकशेषवादिमते मातृभ्यामित्यादावेक- शेषो भवति। प्रातिपदिकैकशेषवादिमते एकशेषो न स्यादिति फलभेद: स्यात्। तथा च जननीपरिच्छेत्तृवाचकयो: भ्यामि सारूप्यसत्वात्, प्रातिपदिकैकशेषवादिमतेप्येकशेषो भवत्येव, केवलं सर्वनामस्थाने एव न भवति, तत्र वैरूप्यात्। न च मातृमात्रो: प्रतिषेध इति वार्तिके एकशेषाकरणेन एवकारापकर्षोऽस्तीति गम्यते अन्यथा भिसि जननीपरिच्छेत्तृवाचिनो: सारूप्यस्य सत्वेन मात्रो: प्रतिषेधो वक्तव्यमित्येवं वक्तव्यं स्यादिति वाच्यम् अनुकरणस्वरूपभभिया एकशेषाकरणेनादोषात् इत्याहु:। सूत्रे एकविभक्तौ इत्यत्र विभक्तिसारूप्ये उपलक्षणम् न तु एकशेषे निमित्तम्, अविद्यमानं सदपि व्यावर्तकं [1]उपलक्षणम्, विशेषणं तु विद्यमानमेव व्यावर्तकं इति तयोर्भेद: यथा काकवन्तो देवदत्तस्य गृहा: इत्यत्र इदानीं गृहे काकाभावे अपि कदाचित् तस्य दृष्टत्वेन देवदत्तेतरगृहव्यावृत्तिस्तेन भवति इति भाव: विभक्ते: उपलक्षणत्वेन अनङ् निमित्तकत्वेन च अन्तराऽपि अयमेकशेष: सुबुत्पत्ते: प्रागेव प्रवर्तते। यदि एतदनारभ्येत तर्हि प्रत्येकं विभक्ति: स्यात् द्वन्द्वंश्च प्रवर्तेत। आरब्धेत्वेकशेषे अनेकसुबन्तविरहात् द्वन्द्वस्याप्राप्तिरेव फलिता इति भाव:, अत्र द्वन्द्वापवादपदेन अपवाद इव अपवाद: इत्यर्थ: यथा अपवादविषये सामान्यशास्त्रस्य न प्रवृत्ति: तथैव अत्रापि एकशेषविषये द्वन्द्वस्य न प्राप्तिरिति भाव: द्वन्द्वस्य अप्राप्तिरिति कथनेन एकशेषारम्भफलमपि निरूपितं द्वन्द्वनिवृत्तिरूपं यथा द्वन्द्व: सहविवक्षायां भवति तथैव एकशेषोऽपि सहविवक्षायामेव प्रवर्तते। इतरेतरयोगद्वन्द्वविषये इति यावत्। यत्र हि अनेकार्थस्य मिलितस्य इतरेतरान्वय: स तथाभूतोऽस्य विषय:। इदं च इदितो नुम् धातो: इति लिंगात् लभ्यते इदित: इत्यत्र अभेदेन परस्परान्वय: भेदघटितसाहित्यनिमित्तकैक- शेषाप्रवृत्तिरितिभाव: तथा हि य: शिष्यते स लुप्यमानार्थाभिधायीति स्थिते श्रूयमाणैकशब्दोपस्थितमविशेषादैक्यरूपेण एवान्वेति। यद्वा पूर्वसूत्रात् द्वन्द्वे इति अनुवर्त्य द्वन्द्वे प्रसक्ते सति इति व्याख्येयम्। सरूपसूत्रे अनेके पक्षा: वर्तन्ते केचन राम राम + औ इति स्थिते उक्तम्, एकविभक्तौ परत: इति च तत्रेत्थमुक्तिसंभव: राम राम इत्यत्र अवयवयोरिव समुदायस्यापि प्रातिपदिकसंज्ञा अस्ति मिलितेन अर्थवत्वात्। न च अर्थवत्वेऽपि समासग्रहणस्य नियमार्थत्वात् नैवमिति वाच्यम्। यत्र समुदाये पूर्वो भाग: पदं तद्विषयको नियम: इति उक्तवात् इति, बहुपटव: इत्याद्यनुरोधेन नियमस्य सजातीयविषयताया: औचित्यात्। तथा च एकाज्द्विर्वचनन्यायेन समुदायप्रातिपदिकादेव द्विवचनाद्युत्पत्ति: तावताप्यवयवार्थानां संख्यान्वयेनानुग्रहसंभवात्। ननु एवं रामकृष्णावित्यादिषु द्वन्द्वं विनैव समुदायात् विभक्ति: स्यात् इति चेत् मैवम्। द्वन्द्वविधौ अनेकं सुबन्तमित्यस्यानुवृत्या एकाज्द्विर्वचनन्यायस्य बाधात् इति। इत्थमुक्तिसंभवे सत्यपि समुदायात् एकविभक्तौ परत: इति पक्ष: किमर्थमुपेक्षित: इति चेत् श्रृणु अस्मिन्पक्षे मातृमातारौ इत्यादौ अपि एकशेष: स्यात्। ननु तन्त्रेणैव सिद्धे इदं व्यर्थम् अक्षा: भज्यन्तां दीव्यन्तामित्यत्राक्षा इति कारकस्य सकृदुपादानेऽपि सर्वत्रान्वय:।

1. प्रौ.म.अ.पु. सरूपसूत्रे

तन्त्रकारणन्तु-शब्दानां [1]तुल्यरूपता एवमक्षो भज्यतां भुज्यतां दीव्यतामित्यापि तन्त्रं द्वेधा शब्दतन्त्रमर्थतन्त्रं च। शब्दस्य पर्यायपरिवृत्यसहत्वे आद्यम्, यथा अक्षा इत्यादौ। त्तसहत्वे त्वन्त्यं, यथा घटा इत्यादौ। पर्यायपरिवृत्यसहत्व इति। पर्यायस्य या परिवृत्तिः आवृत्तिः तस्या सहत्वे इत्यर्थः। यस्य शब्दस्य तन्त्रेण निर्देशः कर्तव्यः त्तपर्यायशब्दान्तरासम्भवे शब्दतन्त्रमिति यावत्। त्तसहत्वे इति। यस्य शब्दस्य तन्त्रेण निर्देशः कर्तव्यः त्तपर्यायशब्दान्तरसम्भवे अर्थतन्त्रमिति यावत्। वस्तुतस्तु प्रवृत्तिनिमित्तनिष्ठैक-प्रकारतानिरूपितनानाविशेष्यताको बोधो यत्र सम्भवति तत्र अर्थतन्त्रम्। यत्र प्रवृत्तिनिमित्तनिष्ठ-नानाप्रकारतानिरूपितनानाविशेष्यताको बोधः तत्र शब्दतन्त्रम्। यथा 'घटा' इत्यत्रैव घटत्वनिष्ठ-नानाप्रकारतानिरूपितनानाविशेष्यताकबोधसम्भवात्। नानार्थस्थले च शब्दतन्त्रमेव, यथा अक्षा इत्यादौ। अत्र हि प्रवृत्तिनिमित्तस्यैकस्याभावेन प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधस्यासम्भवात् इति। सरूपाणामेकशेष एवेति नियमार्थत्वात् एकशेषः। तत्फलं तु प्राप्तद्वन्द्वस्य निवृत्तिः एतच्च सूत्रं भाष्ये प्रत्याख्यातम्। [2]अर्थावर्थौ प्रति यत् अर्थान् अर्थान् प्रति यत् तदपि प्रत्यर्थमेव इत्याश्रयणेन अनेकघटादिपदानां साहित्ये वृत्तिरेव नानाविधानात्। द्विर्वचने अचि इति सूत्रादौ एकशब्दस्तु भाष्ये तन्त्रपरः समाहारद्वन्द्वविषये तु नैकशेषः, एकवच्चास्यन्यतरस्याम् इत्यनेन एकशेषविषयपदानां समाहारे वृत्यभावबोधनात् न ब्राह्मणं हन्यादित्यादौ तु जातिपक्षेणैव निर्वाहः। अत एव तत्र व्यक्तिपक्षे यत्किंचित् ब्राह्मणं हत्वा कृती स्यात् इति दूषणं भाष्ये उक्तम्। शेषशब्दार्थश्च इतरनिवृत्तिपूर्वकमवस्थानम्, एकेति लुप्तविभक्त्यन्तं पृथक् पदमत एव तत्र सरूपाणामित्यस्यान्वयः। तत्र अवस्थानस्य सिद्धतया निवृत्तिरेव विधेया। धातुषु तु नास्य प्रवृत्तिः एकनिष्ठानेकव्यापाराणामिव अनेकनिष्ठानामपि एकधातुना एव निवृत्तभेदानां प्रतीत्या अनेकधातुप्रयोगाप्रसक्ते सरूपाणां किं घटपटौ। शेष इत्येतद् मात्रोक्तौ द्विबहवोरपि शेषः प्रसज्येत एक इत्येतावदुक्तौ एक आदेशः स्यात्।

1. लघु.शे.सरूपसूत्रे
2. म.भा. सरूपसूत्रे

ISSN - 0974-8946 शोधप्रभा
जुलाई–सितम्बर, 2017 वर्षः 42, तृतीयोऽङ्कः

# उदात्तादिस्वरभेदकृतार्थवैलक्षण्यविचारः

श्रीसूर्यमणिभण्डारी*

**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते**[1] इत्यादिना सुस्पष्टं यल्लोकशास्त्रव्यवहारः शब्दात्मकः, शाब्दबोधे च पदजन्यपदार्थोपस्थितिः कारणमिति धिया सर्वप्रथमं पदार्थबोधस्यावश्यकतया शक्तिग्राहकाणां व्याकरणकोशप्रभृतीनां ज्ञानमपेक्षितं भवति, तथापि नानार्थकानि हरिशैन्धवादीनि यानि पदानि सन्ति, तेषां शक्तिग्रहो न हि व्याकरणकोशादिमात्रेण संभवति, अतस्तेषां परिज्ञानाय महर्षिभर्तृहरिरन्यान् शक्तिनियामकान् संयोगादीन् कथयामास। यथा–

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थःप्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥**

**सामर्थ्यमौचिती देशः कालो व्यक्तिस्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृति हेतवः॥**[2]

अर्थात् – अनेकार्थवाचकशब्देषु शब्दार्थस्य संदेहे संयोगादयोऽर्थनियामकाः, शक्तिग्राहका भवन्तीति। तत्र संयोगादीनामुदाहरणमन्यत्र शास्त्रादौ सुस्पष्टं किन्त्वत्रोदात्तादीनां स्वराणां वेदोपकारकत्वात् तज्ज्ञानमन्तरा वेदार्थजन्यपुण्यफलस्य प्रात्यसम्भवाच्च, वेदार्थनिर्धारणे उदात्तादीनां स्वराणां कथमुपयोगितेति विचार्य तत्प्रयुक्तस्वराणामेवोदाहराणि विचार्यन्ते । तत्र स्वरादर्थबोधविषये स्वरानुक्रमणिकायामप्युक्तं यत् स्वरतोऽर्थस्य निर्णयः[3] अर्थादर्थज्ञानं स्वरज्ञानाधीनमिति। स्वरशब्दस्य व्युत्पत्तिरपि **स्वृ शब्दोपतापयोः**[4] इति धातोः करणे घप्रत्यये कृते सति स्वर्यन्तेऽर्था एभिस्ते स्वराः, भवति । तथैव अच्प्रत्ययेनापि **स्वयं राजन्त इति स्वराः**,[5] इत्युभय व्युत्पत्या ज्ञायते यदिमे उदात्तादयः स्वराः स्वात्मानं प्रकाश्य घटपदाद्यर्थानपि प्रकाशयन्ति। यथात्यन्तान्धकारे सन्मार्गबोधाय दीपप्रकाशस्यावश्यकता स्पष्टा तथैव वैदिकसाहित्यघटकपदपदार्थादीनां यथार्थतत्त्वबोधायोदात्तादीनामपि स्वराणां ज्ञानमावश्यकम्। यथोक्तञ्च –

---

* शोधच्छात्रः, व्याकरणविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

1. वाक्यपदीयब्रह्मकान्डे कारिका सं0- 114
2. वाक्यपदीयम् 2 / 315-16 सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः प्रकाशितम्, रघुनाथशर्मणा
3. ऋग्वेदानुक्रमणिका
4. धातुपाठः भ्वादिगणः 666
5. महाभाष्यम् 1। 2 । 29

**अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित्।**
**एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति॥**[1]

नन्वस्माकं संकृतसाहित्ये यावन्त:शब्दा विद्यमानास्ते प्रायः येन केनापि प्रकारेण व्याकरणशास्त्रव्युत्पादनदृष्ट्या प्रकृतिप्रत्ययेन संबद्धाः सन्ति। तत्र पाणिनिः स्वरव्यवस्थापनाय स्वीयव्याकरणशास्त्रे यत्र तत्र प्रत्ययविधाने ङित्, कित्, पित्, ञित् ,लित् , तित् , नित् इत्यादिभिरनुबन्धव्यवस्थां करोति। तेषां प्रकृतिप्रत्ययानां तद्विशिष्टानां सकलशब्दानामपि **'धातोः'**[2] **चितः'**[3] **कितः,**[4] **लिति,** [5]**'ञ्नित्यादिर्नित्यम्,**[6] **आद्युदात्तश्च**[7], **'अनुदात्तौ सुप्पितौ,**[8] **'तित्स्वरितम्'** [9]इत्यादिपाणिनीयसूत्रविशेषैर्वैज्ञानिकदृष्ट्या तत्तत्स्वराणां निर्धारणं सुलभं भवति। अत एवास्माकं यानि वेदादिशास्त्राणि तान्युदात्तादिस्वरेणैव व्याप्तानि सन्तीत्यवधर्तुं शक्यते। उक्तञ्च-

**स्वरे वेदाश्च शास्त्राणि स्वरे गान्धर्वमुत्तमम्।**
**स्वरे च सर्वं त्रैलोक्यं स्वरमात्मस्वरूपकम्॥**[10]

स्वराणां सर्वत्र प्रतिभासमानानामपि विशेषतः प्रतीतिस्त्वस्माकं सत्यचिरन्तनसंस्कृतज्ञानधारायाः प्रभवस्थानेष्वृगादिचतुर्वेष्वेव, आसृष्टेरद्यत्वेऽपि श्रुतिपरम्परातो यथारूपेण संरक्षिता इमे उदात्तादयः स्वराः। अत एवोदात्तादिस्वराणां वैशिष्ट्यमपि वेदेष्वेव प्रतिभाति। उक्तञ्च विश्वनाथेन- ''स्वरस्तु वेदे एव विशेषप्रतीतिकृन्न काव्ये''[11] एषां स्वराणां तात्पर्यमपि वेदार्थतत्त्वबोधाय,तत्र शाबरभाष्ये-अथ त्रैस्वर्यादीनां कथं समाम्नानमिति? अर्थावबोधनार्थं भविष्यतीत्युक्तम्;[12] ऋग्भाष्यभूमिकायामपि ''वेदार्थोपयागितया संक्षेपतः स्वराणां व्यवस्था लिख्यते,[13] माधवस्याप्ययं पक्षो यत् 'स्वरेणार्थव्यवस्थितिः'[14]। तत्र पदपक्षेऽपि यस्मिन्नंश उदात्तः अर्थदृष्ट्या तस्मिन्नंशे विशेषेण प्रकाशः क्रियते। तत्र निरुक्तकार आह - **''तीव्रतरार्थमुदात्तमल्पीयार्थतरमनुदात्तम्''**[15]। अस्मिन्नेव सन्दर्भे स्वरानुक्रमण्यां कश्चन विशेषः-

**तत्रोदात्तपदार्थस्य प्राधान्यं यत्र वर्त्तते।**
**उदात्तस्तत्र भवति सुरूपकृत्लमूतये॥**
**यदि स्वरः पूर्वपदे तदर्थः प्रस्फुटो भवेत्।**[16]

---

1. स्वरानुक्रमणी
2. पाणिनीयाष्टाध्यायी 6।1।156
3. पाणिनीयाष्टाध्यायी 6/1/157
4. पाणिनीयाष्टाध्यायी 6/1/159
5. पाणिनीयाष्टाध्यायी 6/1/187
6. पाणिनीयाष्टाध्यायी 6/1/191
7. पाणिनीयाष्टाध्यायी 3/1/3
8. पाणिनीयाष्टाध्यायी 3/!/4
9. पाणिनीयाष्टाध्यायी 6/1/179
10. स्वरानुक्रमणी
11. साहित्यदर्पण 2/ परिच्छेद
12. शाबरभा- 8/2/31
13. ऋग्वेदादिभा पृ 374
14. स्वरानुक्रमणी !/1/25
15. निरुक्तम् 4/25
16. स्वरानुक्रमणी 1/3/2,3,22

अर्थाद्यत्रोत्तरपदार्थस्य प्राधान्यं तत्रोत्तरपदे उदात्तस्वरो भवति । यदि उदात्तस्वर: पूर्वपदे तर्हि तदर्थ: अर्थात्पूर्वपदार्थ: प्रस्फुटो भवतीति । एवमेव समासस्थलेषु यत्र यत्र उदात्तस्वरो भवति तत्र तस्यैवार्थस्य प्राधान्यं भवतीति, **'काशकु- शावलम्बन्यायेन'** बोध: कर्तव्य:। यथा लोकेऽपि **''रोको मत जाने दो''** इति वाक्ये यदि गमनप्रतिशेधस्तदा वाक्यस्य प्रथमशब्दे **रोको**, इत्यत्र कण्ठस्यारोह: क्रियते । यद्यावरोहस्तदा गमनं न निषिध्यते अपितु गमनमेवार्थं ब्रूते। तथा संस्कृतसाहित्ये च यदि **'नद्यां यान्ति पतत्रिण:**, इति वाक्ये नद्यामित्यत्र स्वरव्यवधानेन न द्यामित्युच्चार्यते तर्हि तस्यार्थो भवति न यान्ति गच्छन्ति द्यां दिवं पतत्रिण:। यद्यव्यवधानेनोच्चारणं तर्हि नद्यां सरिति पतत्रिणो गच्छन्तीत्यर्थ:। वाक्ये वा समासस्थलेषु यस्मिन् पदे वा वर्णे उदात्तस्वरो विद्यते स: काकुस्वर इति मन्तव्य:। तथा यत्र यत्र काकुस्वरो विद्यते तत्र तत्र विशेषार्थ: प्रतीयते। **उक्तञ्च-**

**एवं पदे समासे च यत्रोदात्तो व्यवस्थिति: ।**
**वर्णे पदे वा तत्रापि काकुरस्तीति निश्चय:॥**[1]

साहित्यादिशास्त्रे वक्तृवैशिष्ट्यकाकुस्वरचेष्टादिव्यञ्जनावृत्तेरुच्चनीचादिकण्ठ- स्वरवैशिष्ट्याद्वा तत्तत्पदानां तत्समुच्चितानां वाक्यानां वा शक्तिग्रहो दरीदृश्यते। तत्र साहित्यशास्त्रे स्वरशब्देन काक्वादय उदात्तादयो वा स्वीक्रियते । साहित्यदर्पणटीकायां काकुशब्देन कश्चन भिन्न: कण्ठध्वनि: स्वीक्रियते। उक्तञ्च- **भिन्नकण्ठध्वनिधीरै: काकुरित्य भिधीयते''** विकृतस्वर इति तात्पर्यम्[2]। यथा- **मथ्नामि कौरवशतं समरे न कोपात्'** इत्यत्र काक्वादिस्वरात् मथ्नाम्येवेति विशेषप्रतीतिर्दृश्यते[3]। भरतमुनिनापि स्वीयनाट्यशास्त्रे प्रतिपादितं यत् - हास्यश्रृङ्गारयो: स्वरितोदात्तयुक्तेन वर्णेन पाठ:कर्तव्य:। वीररौद्राद्भुतरसेषु उदात्तकम्पयुक्तेन वर्णेन पाठ: कर्तव्य:। तथा करुणबीभत्सभयानकेषु च अनुदात्तस्वरितकम्पितै: पाठ: कर्तव्य:, इति[4]। तथैव सकलवैदिकमन्त्रघटकानां पदानां पदसंपृक्तमन्त्राणां वा स्वस्वशाखीयहस्त- कण्ठादिसस्वरसञ्चालनेन बोभवीति। अत एव वेदार्थतत्त्वबोधाय तज्जन्यस्वर्गादिपुण्यफलप्राप्तये च स्वराणां यथार्थबोध: कर्त्तव्य:। हस्तकण्ठस्वरभ्रष्टे सति हि न वास्तविकं मन्त्रजन्यपुण्यफलमाप्नोति पुरुष:। तत्र याज्ञवल्क्योप्याह - **''हस्तभ्रष्ट: स्वरभ्रष्टो न वेदफलमश्नुते''** [5]महाभाष्येऽपि - **मन्त्रो हीन: स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रु:स्वरतोऽपराधात्॥**[6]

अर्थाद्यदि मन्त्र: स्वरतो वर्णतो वा हीनो भवति, तदा वास्तविकं पुण्यफलं विहाय विपरीतमनिष्टहेतुभूतं प्रत्यवायं जनयतीति। यथा - **''इन्द्रशत्रुर्वर्द्धस्व''** इत्यनेन स्वरदोषाज्जायमानस्य यजमानहननस्य प्रसंग: प्रदत्त:। शतपथब्राह्मणेऽपि- **वाचि स्वरमिच्छेत। तया स्वरसम्पन्नयाऽर्त्विज्यं कुर्यात् । तस्माद् यज्ञे स्वरवन्तं दिदृक्षन्त एव''**[7] तथा **कर्मणायमभिप्रैतीति** सूत्रव्याख्यावसरे

1. स्वरानुक्रमणी 1/1/21
2. साहित्यदर्पण - 2 परिच्छेद:, लक्ष्मीटीका
3. साहित्यदर्पण: /2 परिच्छेद:
4. नाट्यशास्त्रम्-17/110
5. याज्ञवल्क्यशिक्षा
6. महाभाष्ये- पस्पशाह्निके
7. शतपथब्राह्मणम् 14/4/1/27

भाष्यकार आह- उदात्तस्थाने अनुदात्ते स्वरे कृते खण्डिकोपाध्याय तस्मै शिष्याय चपेटां ददाति'' इति प्रयोगदर्शनेनापि ज्ञायते यत् वैदिकमन्त्राणामुदात्तादिस्वरसञ्चालने कियतावधानेन भवितव्यमिति।

## स्वरभेदादर्थभेदविषये विविधान्युदाहरणानि

**कृदन्तप्रातिपदिके स्वरादर्थविचारः-**

नन्वेकस्यैव हि शब्दस्य स्वरवैभिन्यादर्थेऽपि वैभिन्यमायाति , यत्र सर्वत्र शब्दस्य समानस्वरस्तत्रार्थोऽपि समान एव , यत्र तु स्वरभेदस्तत्रार्थेऽपि सुस्पष्टतया भेदो प्रतिभाति। उक्तञ्च -

**अर्थाभेदे तु शब्दस्य सर्वत्र सदृशः स्वरः ।**
**यदा न तं स्वरं पश्येदन्यार्थं तदानयेत् ॥**[1]

तद्यथा - **'अन्धः'** इति शब्दः स्वरभेदादर्थद्वयं बोधयति । एकं शुक्रार्थमपरञ्चान्ध कारार्थमिति । यथा - **''अन्धस्थान्धों वो भक्षीय**[2]'' अत्रान्धशब्दः आद्युदात्तः सन् शुक्रार्थबोधकः, तत्र हि अन्ध इति अन्ननाम, श्रुत्या तु लक्षणया वीर्यमुक्तम् । अपरचान्धशब्दोऽन्तोदात्तस्वरविधानेनान्ध कारार्थकः। यथा - **''अन्धन्तमः प्रविशन्ति''**[3]। कृष्णशब्दोऽप्याद्युदात्तोऽन्तोदात्तच, मृगविशेषस्य वर्णविशेषस्य वा बोधकः। तत्राद्युदात्तः सन् कृष्णशब्दो मृगविशेषस्य, अन्तोदात्तः सन् वर्णविशेषस्य च बोधकः। आद्युदात्ते यथा- **कृष्णोऽस्याखरेष्ठः**[4] तत्र हि भाष्यम् - अस्ति कृष्णशब्दो वर्णवचनोऽन्तोदात्तः, अस्ति कृष्णशब्दो मृगवचन आद्युदात्तः। तदिहाद्युदात्तत्वात्कृष्णमृगो गृह्यते, ''अन्या श्रुतिरपि यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार'' इति। ''कृष्णमृगो यज्ञस्त्वमसि''[5]। तत्र प्रातिशाख्येऽपि **''कृष्णो मृगसंयोगे''** [6]इत्यनेनाद्युदात्तविधानात्। अपरकृष्णशब्दोऽन्तोदात्तो वर्णवचनः, यथा-

**श्वा कृष्णः कर्णो**[7] अत्रत्य कृष्णशब्दः कृष्णरूपार्थबोधकः 'श्वा कृष्ण इति कृष्णवर्णविशिष्टः कुक्कुर इत्यर्थः। **''कृष्णग्रीवा''**। **''कृष्णा भौमा''**।[8]

परशब्दोऽपरिवचन आद्युदात्तः, तद्यथा - **''यस्मान्न जातः परोऽअन्योंऽअस्ति''**[9] यस्मात् परः उत्कृष्टो देवो नास्ति, इत्यर्थः। **''इयं वेदिः परोऽअन्तः''** [10]इयं वेदिः परः-अन्तः पृथिव्याः। अन्तोदात्तः सन् परशब्दो दूरार्थद्योतकः। यथा- **''परो दिवा परऽएना पृथिव्याः''**[11]। तत्र हि भाष्ये - अस्ति च तत् ब्रह्म दिवा परः द्युलोकादपि दूरे तिष्ठतीत्यर्थः। ''परशब्दो सान्तो दूरवाची'' पृथिव्याः परः पृथिव्या अपि दूर इत्यर्थः।

---

1. ऋगनुक्रमणी
2. शुक्लयजुर्वेदमा० 3/20
3. शुक्लयजुर्वेदमा० 40/9
4. शुक्लयजुर्वेदमा० 2/1
5. शुक्लयजुर्वेदभाण 2/1
6. वाजसनेयिप्रातिशाख्यम् 2/25
7. शुक्लयजुर्वेदमा० 24/40
8. शुक्लयजुर्वेदमा० 24/ 9-10
9. शुक्लयजुर्वेदमा० 8/36
10. शुक्लयजुर्वेदमा० 23/62
11. शुक्लयजुर्वेदमा० 17/29

मात्रा चाद्युदात्तः सन् परिणामवाची, अन्तोदात्तः सन् जनन्यर्थबोधकतृतीयैकवचनम् । आद्युदात्ते परिणामं यथा - **''कस्य मात्रा न विंद्यते''**[1] अर्थात् कस्य मात्रा परिणामं न विद्यते इत्यर्थः। अत्र प्रथमे मन्त्रे प्रश्नकृते सति अग्रिमे मन्त्रे **''गोस्तु मात्रा न विंद्यते''**[2] गोः धेनो र्मात्रा - परिमाणं न विद्यते यज्ञधारकत्वात्। अत्राद्युदात्तविधानं करोति **''मात्रा च परिणामे''** इति सूत्रम्[3]। अन्तोदात्तविषये - **''विभूर्मात्रा प्रभूःपित्रा''**[4] अर्थात् हे अश्व त्वं मात्रा - मातुः सकाशाद्विभूरसि समर्थोऽसि इत्यर्थः, मात्रापित्रेति तृतीये पञ्चम्यर्थे[5]। एताशब्दविषयेऽपि तथैवार्थनिर्धारणं भवति, आद्युदात्तः सन् एताशब्दो वर्णवाची, अन्तोदात्तः सन् पूर्वपरामर्शद्योतकः । तत्रोदाहरणम्- आद्युदात्ते-'' **एता ऐन्द्राग्नाः**'' "एताः कर्बुरवर्णास्त्रय इन्द्राग्निदेवताः सप्तमे। अन्तोदात्ते च पूर्वपरामर्शो यथा - **एता मे अग्न इष्टका धेनवः**[7] तत्र हि एकाद्यष्टादशसंख्यासंज्ञासंमिता इष्टका एता हे अग्ने मे धेनवः सन्त्विति पूर्वोक्तस्य निगमनम्। तथा पाणिन्यष्टकेऽपि **''क्षयो निवासे''**[8] इति सूत्रेण क्षियन्तिनिवसन्त्यस्मिन्निति क्षयः, **''पुंसि संज्ञायां घः प्रायेण''**[9] इति सूत्र बोधितं घप्रत्यान्तनिवासार्थकक्षयशब्दमादाय आद्युदात्तो विधीयते। यदा त्वनतोदात्तस्तदा नाशपदपर्यायवाचकः, एरच् इत्यच्प्रत्ययघटितः क्षयशब्दः। अतोऽवबुध्यते यत् आद्युदात्तः क्षयशब्दः निवासार्थबोधकः, अन्तोदात्तः क्षयशब्दः नाशवाचकः। यथाद्युदात्ते-

**क्षयें जागृहि प्रपश्यन्** [10]। **स्वे' क्षयें शुचिव्रत।**[11]

**अन्तोदात्ते च -'क्षयों**

**वर्तते दस्यूनाम्'** तथैव जयशब्दोऽपि यदाद्युदात्तस्तदा 'जयन्ति येन जयोऽश्वः' इति करणवाचकघप्रत्ययजन्यं अश्वरूपिणमर्थं द्योतयति। **जयः करण**मिति सूत्रेणाद्युदात्तविधानात्[12]। अन्तोदात्तः स्वरविशिष्टो जयशब्दः विजयार्थकः **'अच्'** प्रत्ययान्तत्वेन चित्वात् **'चितः'** [13]इत्यनेनान्तोदात्तः।

**तद्धितप्रत्ययघटितप्रातिपदिकपदानां स्वरादर्थविचारः**- यथा कृत्प्रत्ययघटितानां पदानां शाब्दबोधे उदात्तादिस्वराणां वैशिष्ट्यं, तद्वदेव हि तद्धितप्रत्ययघटितानां पदानामपि। यथा-**''भ्रातृव्यः''** तद्धितान्तोऽयं भ्रातृव्यशब्दस्तत्रैकोऽमित्रपर्यायः, अपरश्चापत्यार्थकः। तत्राद्युदात्तः सन् यो भ्रातृव्यशब्दः स शत्र्वर्थं द्योतयति। **व्यन्सपत्ने** [14]इति सूत्रेण सपत्ने शत्रुपर्याये व्यन्प्रत्ययविधानात्। नित्वात् **''ञ्नित्यादिर्नित्यम्''**[15] इत्याद्युदात्तः। यथा- **''भ्रातृव्यस्य वधाय** शत्रोच वधाय त्वामुपधामित्यर्थः[16]। अपरश्च भ्रातृव्यशब्दः

---

1. शुक्लयजुर्वेदमा0 23/47
2. शुक्लयजुर्वेदमा0 23/48
3. वाजसनेयिप्रातिशाख्यम् 2/28
4. शुक्लयजुर्वेदमा0 22/19
5. '' '' भा0 22/19
6. शुक्लयजुर्वेदमा0 24/8
7. शुक्लयजुर्वेदमा0 17/2
8. पाणिनीयाष्टाध्यायी, 6/1/195
9. पाणिनीयाष्टाध्यायी, 3/3/118
10. ऋग्वेद-102198/1
11. ऋग्वेद- 10/199/9
12. पाणिनीयाष्टाध्यायी,6/1/196
13. पाणिनीयाष्टाध्यायी, 621/157
14. पाणिनीयाष्टाध्यायी,4/1/145
15. पाणिनीयाष्टाध्यायी,6/1/191
16. शुक्लयजुर्वेदमा0 1/17

स्वरितान्तः सन् भ्रातुः पुत्रस्य वाचकः । "**भ्रातुर्व्यच्च**"[1] इति व्यत्प्रत्ययान्तत्वात् **तित्स्वरितम्** [2]इत्यनेन स्वरितविधानाच्चेति।

दात्तः , **गौप्तः** - विपाशो नद्या उत्तरदेशे दत्तेन गुप्तेन वा निर्वृत्तः कूप इत्यर्थः।

**दात्तः , गौप्तः** - विपाशो नद्या दक्षिणदेशे दत्तेन गुप्तेन वा निर्वृत्तः कूप इत्यर्थः।

अत्र प्रथमे "**उदक्च विपाशः**" [3]अनेन सूत्रेण विपाशो नद्या उत्तरदेशे ये कूपास्तेष्वभिधेयेषु चातुरर्थिकोऽञ् प्रत्ययो भवति '**तेन निर्वृत्तम्**'[4] इत्यर्थे। ञित्वात् "**ञ्नित्यादिर्नित्यम्**"[5] इत्यनेनाद्युदात्तो भवति। अपरस्मिन् विपाशो नद्या दक्षिणदेशेऽभिधेये औत्सर्गिकोऽण् प्रत्ययो भवति, तस्य, च '**आद्युदात्तश्च**' [6]अनेनोदात्तविधानात् अन्तोदात्तपदमित्यवगम्यते। तथेत्यपि द्रष्टुमवश्क्यते यन्महती सूक्ष्मेक्षिकाचार्यस्येति।

**समासविषयकान्युदाहरणानि-**

समासस्योदाहरणविषये सुप्रसिद्धमुदाहरणं शतपथब्राह्मणे लभ्यते तत्र- **अथ यदब्रवीत् इन्द्रशत्रुवर्धस्वेति तस्मादु हैनमिन्द्र एव जघान । अथ यद्ध शश्वदवक्ष्यत् - इन्द्रस्य शत्रुर्वर्धस्वेति शश्वदुह स इन्द्रमेवाहनिष्यत्**[7]।। इममेवार्थ महाभाष्याकारोऽप्यनुसृत्य "**दुष्टःशब्दः**" इति व्याकरणाध्ययनप्रयोजनकथनावसरे वितनोति[8]। तत्र कश्चनः प्रसगः यत् त्वष्टुः पुत्रः वृत्रासुरः, तस्य वर्धापनाय इन्द्रस्य च वधाय इन्द्राभिचारो यज्ञः प्रारब्धस्तत्र इन्द्रस्य शत्रुः शातयिता भव इत्यर्थे तत्पुरुषसमासार्थे **समासस्य** [9]इति सूत्रप्रयुक्तान्तोदात्ते **इन्द्र शत्रुर्वधस्व** इति प्रयोक्तव्ये ऋत्विजा **इन्द्रशत्रुर्वधस्व** इत्याद्युदात्तमन्त्र ऊहितः, तथा सति इन्द्रः शत्रु : शातयिता यस्य स वर्धतामिति बहुव्रीहिसमासजन्योऽन्यार्थः समुद्गतस्तेन इन्द्र एव वृत्रासुरं हिंसितवानिति। अत्रत्यशत्रुशब्दः क्रियापरो नतु रूढः। रुढाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थाभेदः[10]। इन्द्रशब्दः**ऋज्रेन्द्राग्रवज्र**0 [11]इति औणदिकसूत्रेण रन्नन्तो निपात्यते, तथा बहुव्रीहिसमासे कृते पूर्वपदप्रकृतिस्वरप्राप्ते नित्वात् **ञ्नित्यादिर्नित्यम्** इत्यनेन सूत्रेण आद्युदात्तः। तत्पुरुषे तु **समासस्य** इति सूत्रेणान्तोदात्तः। तस्मयादुभयविधोऽयं शब्दः। तत्रैव भाष्ये स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत" इत्यत्र

1. पाणिनीयाष्टाध्यायी,4/1/144
2. पाणिनीयाष्टाध्यायी,6/1/179
3. पाणिनीयाष्टाध्यायी,4/2/73
4. पाणिनीयाष्टाध्यायी,4/2/67
5. पाणिनीयाष्टाध्यायी,6/1/191
6. पाणिनीयाष्टाध्यायी,3/1/3
7. शतपथब्राह्मणम्, 1/5/2
8. महाभाष्ये-पस्पशाह्निकम्
9. पाणिनीयाष्टाध्यायी ,6/1/217
10. महाभाष्यपस्पशाह्निकस्य प्रदीपटीकायाम्
11. उणादिकोषः2/29

**'स्थूलपृषती'** इति शब्दे बहुव्रीहितत्पुरुषयोरन्यतरसंदेहे स्वरेणैव व्यवस्थितिः । यदि पूर्वपदप्रकृतिस्वरः स्यात् तदा बहुव्रीहिर्यदि चान्तोदात्तस्तदा तत्पुरुषः[1]। अनेनैवरूपेण समासवाक्ययोः भेदप्रकटनाय एकमुदाहरणं प्रदीयते –

**ब्राह्मणग्रामं गच्छ** – हे ब्राह्मण ग्रामं गच्छ, इत्यर्थः ।

**ब्राह्मणग्रामं गच्छ** – ब्राह्मणस्य ग्रामं गच्छ, इत्यर्थः ।

**ब्राह्मणग्रामं गच्छ** – ब्राह्मणसमुदायं लक्ष्य गच्छ, अथवा ब्राह्मणस्वामिकग्रामं गच्छ। इत्यर्थः। अत्र प्रथमे ब्राह्मणग्राम इत्युभयपदयोः ब्राह्मणपदस्य आद्युदात्तत्वेन स्वतन्त्रोभयपदे। ब्राह्मणपदे **''आमन्त्रितस्य च''**[2] इत्यनेन षाष्ठसूत्रेणाद्युदात्तत्वविधानात् संबोधनार्थो द्योत्यते, अतोऽर्थो भवति – हे ब्राह्मण! ग्रामं गच्छ इति, अत्रासमस्तव्यवहारः । द्वितीयत्रितीयवाक्ययोरेकोदात्तदर्शनात् समस्तव्यवहारः, अर्थात् षष्ठीतत्पुरुषसमासः । तेनात्रान्तोदात्तविधानं **''समासस्य''** [3]इत्यनेन सूत्रेण, अतोऽर्थो भवति ब्राह्मणानां यो ग्रामस्तं गच्छ इत्यर्थः। तृतीयवाक्यस्य प्रथमे ब्राह्मणपदे **''ग्रामेऽनिवसन्तः''**[4] इत्यनेन ग्रामोत्तरपदे पूर्वस्याद्युदात्तविधानेनार्थो भवति – ब्राह्मणानां यो ग्रामसमुदायस्तमुद्दिस्य गच्छ, अथवा ब्राह्मणस्वामिकं ग्रामं गच्छ इत्यर्थस्स्फुटो भवति ।

**कृष्णकम्बलम् आनय** – कृष्णं कम्बलं यस्य पुरुषविशेषस्य तमानय, इत्यत्र बहुव्रीहिसमासेनाद्युदात्तत्वात् अन्यपदार्थःप्रतीयते ।

**कृष्णकम्बलम् आनय** – अत्रान्तोदात्तपदपाठेन तत्पुषार्थः प्रतीयते , तेनार्थो भवति कृष्णवर्णविशिष्टं कम्बलमानय इति। यत्र यत्र उदात्तस्वरो भवति तत्तदर्थः प्रस्फुटो भवतीति पूर्वोक्तरीत्या प्रथमपदे बहुव्रीहिसमासेन अन्यपदार्थस्य प्राधान्यात् कृष्णकम्बलयोऽप्राधान्येऽपि तुलनात्मकदृष्ट्या उभयोर्मध्ये तदर्थः कृष्णपदार्थ एव प्रस्फुटो भवति। अर्थात् अनेकेषु वर्णविशिष्टकम्बलस्वामिषु मध्ये यः पीतवर्णविशष्टकम्बलस्वामी तस्यैवानयनं भवति।

पदसमासवाक्यस्वरेषु वाक्यस्वरापेक्षया समासस्वरः सूक्ष्मतरः। समास- स्वरापेक्षया पदस्वरः सूक्ष्मतर इत्यवगन्तव्यम्। उक्तं हि–

**तत्रैतस्मिन् पदे काकुर्देवैरेवावगम्यते।**
**सूक्ष्मविखिः समासस्थः प्राकृतैरपि तिङ्स्वरः॥**[5]

---

1. महाभाष्यपस्पशाह्निकम्
2. पाणिनीयाष्टाध्यायी,6/1/192
3. पाणिनीयाष्टाध्यायी,6/!/217
4. पाणिनीयाष्टाध्यायी,6/2/84
5 स्वरानुक्र01/1/22

अर्थात् पदान्तर्गतकाकुस्वरात् (उदात्तस्वरात्) अर्थस्य सूक्ष्मभेदः, देवैरेवागम्यते समासस्वरादर्थभेदः सूक्ष्मविद्विद्वर्ज्ञेयः। एवं तिङ्स्वराज्जायमानार्थबोधः साधारणजनैरपि ज्ञेयो भवति। पदपक्षे यथा-**गन्ता, गन्ता**, इत्यत्राद्युदात्त - अन्तोदात्ताभ्यां , एकस्मिन् व्यपारस्य अर्थात् - प्रकृतेर्वैशिष्ट्यम्। अपरस्मिन् प्रत्ययस्य - कर्तुरिति, इदं तु सूक्ष्मदृष्ट्यैव परिज्ञातं भवति।

गन्तृशब्दस्तृन्तृज्प्रत्ययाभ्यां निष्पद्यते तत्र तृजन्तपक्षे चित्वात् **'चितः'** इत्यनेनान्तोदात्तः। तेन प्रत्ययार्थः स्फुटो भवति। अतः शब्दार्थबोधो भवति यत्- उत्तरदेशसंयोगानुकूलो यो व्यापारस्तदाश्रयो देवदत्तः, इति। यदि तस्यैव तृन्प्रत्ययेन व्युत्पत्तिः क्रियते चेत् नित्वात् ञ्नित्यादिर्नित्यम् इत्यनेनाद्युदात्तस्तस्मात् प्राधान्येन धात्वर्थः स्फुटो भवति, धातुभागे उदात्तत्वस्य विद्यमानत्वात्। तेनार्थबोधेऽपि उत्तरदेशसंयोगानुकूलव्यापाररस्य वैशिष्ट्यं प्रतिभातीत्यवधर्तुं शक्यते। यथा विशिष्टं यद्गमनं तदाश्रयो देवदत्तः, अत्र देवदत्तनिरूपितक्रियाया वैशिट्यं प्रतिभात्ययं विशेषः, अन्यत् समानमेव।

**तृन्तृचोश्चार्थभेदोऽयं प्रकृत्यर्थः स्फुटस्तृनि।**
**तृचि स्फुटःप्रत्ययार्थः प्रकृत्यर्थोपसर्जनः॥**[1]

एवमेव सर्वेषु समस्तेषु असमस्तेषु वा पदेषु विशुद्धार्थप्रतिपत्तये प्राज्ञैः स्वरस्य सूक्ष्मविचारः कर्त्तव्यः।

1. स्वरानुक्र01/8/7

ISSN - 0974-8946 शोधप्रभा
जुलाई-सितम्बर, 2017 वर्ष: 42, तृतीयोऽङ्क:

# जातिशक्तिविषयिण्यवधारणा

श्रीबद्रीनारायणगौतम:

जाति: का इति जिज्ञासायां नैयायिका: "एकत्वे सति अनेकसमवेतत्वम्" इति ब्रुवते। वैयाकरणा अपि "यत्तर्हि तद्भिन्नेष्वभिन्नम्, छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्द:"[1] इति भाष्यप्रामाण्येन नित्यत्वे सत्येकत्वे सत्यनेकसमवेतत्वमित्येव जातिलक्षणं स्वीकुर्वन्ति। तथा जातेश्चातुर्विध्यं स्वीकुर्वन्ति। तत्र प्रथमा आकृतिग्रहणा इत्युच्यते, इयं चाकृतिग्रहणा जाति: तत्तदाकारविशेषै: परिज्ञायते यथा घटत्वपटत्वमठत्वादय:। द्वितीया जाति: असर्वलिङ्गा सती एकस्यामेव व्यक्तौ जातेर्ज्ञानात् व्यक्त्यन्तरेऽपि परिज्ञानम्, यथा- ब्राह्मणत्वक्षत्रियत्वादीनाम्। न ह्यत्र आकृत्यैव जाते: परिज्ञानं कर्तुं शक्यते। तथा चोक्तं भाष्यकृता -

**आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।**
**सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणै: सह।।**[2]

अत्र च गोत्रमित्यनेनापत्यप्रत्ययान्तो बोध्य:, तथा चरणपदेन च शाखाध्येतृवाची स्वीक्रियते। अनयो: द्वयोरपि जातित्वेन व्यवहार: अतिदेशात्। तुरीया च जाति: यावद्द्रव्यभाविनी यथा गोत्वादिरिति बोद्धव्यम्। नैयायिकाश्च जातेर्नित्यत्वमङ्गीकुर्वन्ति, महाप्रलयेऽपि तासां स्थितिरिति तेषामाशय:। वैयाकरणास्तु शब्दब्रह्मातिरिक्तं सकलमपि जगदनित्यमिति सिद्धान्तात् जाते: यावत्सृष्टिस्थायित्वमिति वर्णयन्ति। आकाशादावपि औपाधिकभेदमादाय जाति: स्वीकृतैव। तथा चोक्तं हरिणा -

**संयोगिधर्मभेदेन देशे च परिकल्पिते।**
**तेषु देशेषु सामान्यमाकाशस्यापि विद्यते।।**[3]

तत्र मीमांसका: जातावेव शक्ति: इति प्रतिपादयन्ति, घटमानयेत्यादौ जातेरानयनासम्भवात् व्यक्तेराक्षेप: कर्तव्य इति तेषामाशय:। वैयाकरणास्तु जातिविशिष्टव्यक्तौ शक्तिरिति स्वीकुर्वन्ति, यतो हि उभयस्मिन्नपि पक्षे पाणिने: स्वीकृते: सत्वात्।

भाष्ये च "सिद्धे शब्दार्थसम्बन्धे"[4] इति वार्तिकस्य व्याख्यानावसरे तत्र शब्दार्थत्वेन जातिं गृहीत्वा अर्थे सा एव जातिर्नित्या यस्यां तत्त्वं न विहन्यते इत्याशयं प्रकटयति भाष्यकार:। तथैव वैयाकरणनिकाये "एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा"[5] इत्यादिना तत्र नामार्थनिरूपणावसरे

---

* शोधच्छात्र:, व्याकरणविभाग:, श्रीला.ब.शा.रा.सं.वि.दिल्ली-16

1. म.भा.पस्पशाह्निकम्
2. म.भा.4.1.63
3. वा.प.3.1.15
4. म.भा.पस्पशाह्निकम्
5. वै.भू.सा.नामार्थनिर्णय:

एकत्वेन कस्याभिव्यक्तिर्भवति जातेर्व्यक्तेर्वा इत्यादिचर्चा प्रायशोऽनादितश्चलत्येव। तत्र "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा"[1] इति सूत्रस्य व्याख्यानावसरे प्रातिपदिकार्थः इत्यनेन किं गृह्यते इति चर्चायां नियतोपस्थितिकः प्रातिपदिकार्थ इत्युक्तम्। तत्र नियतोपस्थितिकत्वं कस्य गृह्यते जातेर्वा व्यक्तेर्वा उभयमतमपि व्याकरणदर्शने प्रथितम्। यतो हि तत्र व्यक्तिपक्षस्वीकारे "सरूपाणामेकशेष एकविभक्तौ"[2] इति सूत्रं प्रमाणम्। जातौ शक्तिस्वीकारे तु "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"[3], "सवर्णेऽण्ग्रहणमपरिभाष्यम्", "आकृतिग्रहणात्सिद्धम्" इति भाष्यवार्तिकञ्च प्रमाणत्वेन स्वीक्रियते। अथ च द्रव्यपदार्थवादस्य, जातिपदार्थवादस्य च प्रतिपादनं जातिसमुद्देशस्य आदावेव प्रतिपाद्यते। यथा-

**पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा।**
**पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितौ॥**[4]

अत्र सर्वशब्दानां पदार्थौ इत्युक्त्या द्रव्यपदार्थः जातिपदार्थश्च गृह्येते, तौ द्वावपि नित्याविति उपवर्णितौ स्त इति तस्याः आशयः। अत्र जातिपदार्थवादस्वीकारेऽपि न केवला जातिः पदार्थः अपितु व्यक्त्यवच्छेदकजातिः पदार्थः, अत एव तत्र केवलजातिपदार्थवादिनां मीमांसकानां मतखण्डनं साफल्यं भजते। तथा च जातिपदार्थवादमपि व्यक्त्यवच्छेदकजातिं स्वीकार्यैव प्रवृत्तमिति ज्ञायते। तथा च जातिपदार्थवादे स्वीकारे तत्र वाक्यार्थभूतया आख्यातपदवाच्यया क्रियया कथं समन्वयः। यतो हि साधनेन क्रियान्वेति, जातिश्च न साधनम्, जातिश्च अमूर्त्तत्वेन न कारकम्। जात्याधारस्य तु साधनत्वं कारकत्वं वा वक्तुं शक्यं तथापि तस्य साक्षात् अभिधानं नास्ति इति जात्याधारस्य चार्थसामर्थ्यात् प्रतिपत्तेर्यथाभिधानं जात्याधारस्य द्रव्यस्यैव क्रियायां सम्बन्धः स्यात् न तु जातेः प्रतिनिधेरित्याशङ्कायां तत्र साहचर्येण सम्बन्धे शब्दानां पदार्थभूता जातिः शक्त्युपलक्षणेन सम्बद्धा भवति इति शक्त्युपलक्षणद्वारा जातिविशिष्टस्यैव द्रव्यस्य कारकेणान्वयो भवति इति न दोषः। अथ च जातिः न शक्त्युपलक्षणमपि तु अभिधेया एव इति वादिनां मते प्रमाणादेव अत्रापि शासनं भवतीति कथनेन दोषपरिहारः। अथवा अनुमानेनापि प्रतिनिधिरुपपाद्यते यथाहि "खदिरे पशुं बध्नाति" इति वाक्यस्थं खदिरपदम्, बन्धन-समर्थद्रव्यपरम्, अस्वातन्त्र्यफलकबन्धनक्रियाधिकरणत्वात्, यन्नैवं तन्नैवं यथा यूपं पश्येति वाक्यस्थं खदिरपदमित्यादयोऽनुमानप्रयोगास्तत्र द्रष्टव्याः। इयञ्च जातिर्निर्निमित्ता अपि न भवति, तत्र शब्दसमवायि-जातिरपि अर्थसमवायिजातिमभिदधातीति रक्ते गुणे सति कषाये तत्त्वं व्यपदिश्यते तथैव शब्दार्थसम्बन्धाच्छब्दे जातिरवस्थिता वर्तते। एवञ्च यथा कषाये लौहितत्वज्ञानं तथैव अर्थजातावपि शब्दजातित्वव्यवहारः। शब्दजातीनामपि वाचिका अन्या जातिर्भवति इति कथनेऽपि न तत्र अनवस्थाप्रसङ्गः। एवञ्च सर्वे शब्दाः अर्थाश्च जात्यभिधायिनः सन्ति इति कथनेऽपि दोषो न भवति। यथा द्रव्यपदार्थवादिनः कथयन्ति -

**द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वोऽर्थ उच्यते।**
**द्रव्यधर्माश्रयाद् द्रव्यमतः सर्वोऽर्थ इष्यते॥**[5]

---

1. पा.सू. 2.3.46
2. पा.सू. 1.2.64
3. पा.सू. 1.2.58
4. वा.प.3.1.2
5. वा.प.3.1.13

इत्थञ्च जातिपदार्थवादिनां वैयाकरणानां मतानि सम्यक् प्रदर्श्य वैशेषिकनयेनापि अर्थगतसमानधर्माश्रयेण जातिपदार्थव्याप्तिः साध्यते। तत्र आकाशत्वादयो जातयः न वा इति विषये संयोगिद्रव्यादेव तत्र घटाकाशः, मठाकाशः इत्यादिकथनेन आकाशत्वमपि शब्दजातिः स्वीक्रियते। यथा घटशब्दः सर्वेषु घटेषु विद्यमानं घटो घट इति प्रत्ययानुवृत्तिजनकं तथा घटो घट इति शब्दानुवृत्तिजनकं च जात्यपरपर्यायं घटत्वरूपं सामान्यमभिधत्ते। एतावदेव घटपटादिभिः सर्वैरपि शब्दैः स्वासाधारण्यो घटशब्दत्व- पटशब्दत्वादिजातयोऽप्यभिधीयन्ते। स्वजातिप्रत्यायनानन्तरं घटत्वपटत्वादीनाम् अर्थजातीनामात्मसु शब्दजातीनामध्यारोपस्य कल्पनाऽपि अर्थजातिपदार्थनये प्रतिपाद्यते। अथ च शब्दार्थजात्योरभेदाध्यारोपस्यापि कल्पना अस्त्यत्र, घटोऽयमर्थ इत्यस्य घटशब्दत्वाभिन्नेयं घटत्वरूपा जातिरर्थो भवति। तथा च घटत्वरूपा जातिः घटोऽयमर्थः इति व्यपदेशाय स्वीक्रियते। अत्र अर्थजातौ शब्दजातिर्भवतीति कल्पने निःसामान्यानि सामान्यानि इत्यस्य हानिः स्यादिति शङ्कायां तत्र भर्तृहरेः समाधानं सुष्ठु दृश्यते। यथा-

**जातिशब्दैकशेषे सा जातीनां जातिरिष्यते।**
**शब्दजातय इत्यत्र तज्जातिश्शब्दजातिषु॥**[1]

इति स्वाभिमतजातिपदार्थविषये वैशेषिकानामद्वैतिनां निरुक्तकाराणाञ्च मतानि सम्यक् अवतारितानि दृश्यन्ते। वैयाकरणा अपि अद्वैतिन इव शब्दाख्यब्रह्मणो विवर्तमेतच्चराचरमिति मन्वते। तथाऽपि परोपाधिं मायामाश्रित्यैव भिन्ना अभिन्ना वा इति व्यवहारो भवति, तस्य व्यवहारस्योपपादनार्थमेव विशेषेषु सामान्यमिति परोपाधितः पृथगेव स्वीक्रियते इति वदन्ति। तत्र जातिः पदार्थः इति जातिस्वीकारेऽपि जाते: कः उपयोग इत्यस्मिन् विषये जातयः निवर्त्यकर्मस्थले क्रियाणां प्रयोजिकाः भवन्तीति तत्र जातीनामावश्यकता भवतीति उक्तं भवति। तत्र पुनः कार्यनियतपूर्वकाले कारणेष्वसन्निधानात्कथं तत्र जातिः कारणानां प्रयोजिका इत्याशङ्कायां तु कारणेषु सम्बन्धं कृत्वा जातयः सर्वगताः तिष्ठन्ति इति तत्र सन्निधानमेव भवतीति वक्तव्यं भवति। पुनस्तत्र प्राथम्योपस्थितिस्तु द्रव्यस्यैव भवति यथा घट इति उच्यमाने घटद्रव्यस्य दर्शनस्य सत्त्वादिति कथं पदार्थत्वेन जातेर्ग्रहणं कृतमित्याशङ्कायाः जातिपदार्थस्य प्राथम्येन ग्रहणाय उदाहरणं दर्शितं हरिणा यथा -

**यथा जलादिभिर्व्यक्तं मुखमेवाभिधीयते।**
**तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते॥**[2]

तथा च जात्युपाध्योः भेदोऽपि अस्त्येव। अथ च सा सत्ताख्या जातिः सर्वशब्दविषया भवति, अत एव तत्र हर्युक्तिः जातिपदार्थवादं दृढं करोति यथा -

**तां प्रातिपदिकार्थं च धात्वर्थञ्च प्रचक्षते।**
**सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥**[3]

इत्थञ्च सत्तायाः सर्वशब्दवाच्यत्वकथनेन स्वमतपुष्टौ निरुक्तमतेन जातिपदार्थवादस्य विचारोऽत्र प्रदर्शितः। तत्र षड्भावविकारेष्वपि सत्तायाः उपादेयता अस्त्येव। निरुक्तमते व्यञ्जकानां गोत्वादीनां

1. वा.प.3.1.9
2. वा.प.3.1.29
3. वा.प.3.1.34

भेदादेव परसामान्यस्य अपि भेदो दृश्यते इति स्वीकारः।

अत्र जातिस्तु आश्रयसमवधानतया आश्रये एव आत्माभिव्यक्तिं करोति इति उक्तम्। तत्र महाप्रलयावसरे सर्वेषामाश्रयाणां नाशेन तत्र जातेराश्रयनाशत्वात् जातीनामपि हानिः स्यादित्याशंका तु तत्र महाप्रलयस्य अस्वीकारेणैव कर्तुं शक्यते। अथवा स्वीकारेऽपि महाप्रलये एकस्य ब्रह्माण्डस्य महाप्रलयेऽपि ब्रह्माण्डान्तरस्य तथात्वाभावान्न कोऽपि दोषः। एषा च जातिः सर्वगता अस्ति, सर्वगतत्वेऽपि प्राणिष्ववस्थिता जातिद्वारा पुण्यपापयोः निमित्तत्वं स्वीक्रियत इति काष्ठे सत्यपि ब्राह्मणत्वे तस्य हनने न प्रत्यवायः। एवञ्च नरसिंहत्वादयः पृथगेव जातयो न तु नरत्वसिंहत्वसंवेद्या इति जातेः संविज्ञानपदत्वेन भेदकथनं भवत्येव।

अत्र वास्तवरूपेण जातिपदार्थनयस्वीकारे लाघवन्तु तत्र हि द्रव्यपदार्थवादनये स्वीकृते द्रव्यगुणयोः क्रियायां साध्यसाधनभावरूपस्य सम्बन्धस्य श्रौतत्वे तयोः परस्परं सम्बन्धस्य च विशेष्यविशेषणभावरूपस्य वाक्यीयत्वे वा स्थिते श्वेतच्छागाभावे कृष्णच्छागालम्बनवत् छागाभावे पिष्टपिण्डीमालभ्य कृती स्यादिति चोद्यमत्र द्रव्यपदार्थवादिनये आपतति। अस्याः निराकरणन्तु जातिपदार्थनये एव सम्भवति। यथा-

**यदा तु जातिः शक्तिर्वा क्रियां प्रत्युपदिश्यते।**
**सामर्थ्यात् सन्निधीयेते तत्र द्रव्यगुणौ तथा॥**[1]

इत्थञ्च द्रव्यपदार्थवादिनयतः जातिपदार्थनयस्वीकारे लाघवं दृश्यते। तथा च शक्तेः सादृश्यादीनामपि शक्तेरेव अपरनामत्वेन व्यतिरेकेण वा जातित्वं सिद्ध्यति। तथा चात्र जातिसाधनोपक्रमे सांख्याः, अद्वैतिनः, वैशेषिकाः, बौद्धाश्च कीदृशीं धारणां स्वीकुर्वन्ति इति "प्रज्ञा विवेकं लभते भिन्नैरागमदर्शनैः"[2] इत्युक्तं सफलीकुर्वन् प्रस्तौति भर्तृहरिः। तथा च जातिवादिनां निर्णयत्वेन इमां कारिकामवतारयति यथा-

**ज्ञानेष्वपि यथार्थेषु तथा सर्वेषु जातयः।**
**संसर्गदर्शने सन्ति ताश्चार्थस्य प्रसाधिकाः॥**[3]

इत्थञ्च ज्ञानेषु विषयेषु सर्वत्रैव स्थितोऽभेदाध्यवसायोऽबाधितोऽविभ्रमोऽप्यस्ति। अथवा तत्र ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकं भवति यतो हि जातु कदाचिदपि ज्ञानं ज्ञेयवत् पररूपेण परस्य सामान्यस्य रूपेण स्वरूपेण न निरूप्यते। ज्ञानस्य स्वयंप्रकाशत्वेन ज्ञेयत्वाभावात्। ज्ञानं हि स्वप्रकाशे स्वतन्त्रमतो ज्ञेयमेव न भवति, एवमपि ज्ञानानां यथा स्वभेदावसाये ज्ञेयपरतन्त्रत्वं तथा स्वाभेदावसायेऽपि ज्ञेयगतसामान्यपरतन्त्रत्वमस्त्येव। तत्र यथा ज्योतिः अन्येन प्रकाशेन न प्रकाश्यते तथैव ज्ञानं ज्ञेयं न भवति। यद्यपि दर्शनान्तरीयाः ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकं भवतीति ब्रुवन्ति तथापि अत्र ज्ञानानां सामान्यमुपकारकं न भवति इत्येव प्रतिपादितम्। तथा च तत्र सर्वविषयात्मिका एका सत्ता या शब्दब्रह्मनाम्ना अभिधीयते सा एव सर्वपदार्थसारभूताऽस्ति, यतो हि तस्या एव विवर्तत्वादिकं सर्वमिति सर्वेषां मूलमेव "ॐ अथ इत्येतद्ब्रह्म" इति एकमेव मूलं तत्त्वं स्थितमिति प्रमाणपरिशुद्धा जातिः दर्शनान्तरीयमतलोचनपुरस्सरं प्रातिपदिकार्थत्वेन उत पदार्थत्वेनैव स्वीकरणे न्यायसंगतिः दृश्यते इति बलाद् जातिपदार्थवाद एव लाघवात् शक्तिः स्वीकार्या, तद्गताः विप्रतिपत्तयश्च पूर्वोक्तप्रकारेण परिहरणीया इति शम्।

1. वा.प.3.1.77
2. वा.प.2.492
3. वा.प.3.1.102

ISSN - 0974-8946 शोधप्रभा
जुलाई-सितम्बर, 2017 वर्षः 42, तृतीयोऽङ्कः

# ईशावास्योपनिषद्विमर्शः

डॉ. सुन्दरनारायणझाः

उप-नि-इत्युभयोरुपसर्गयोः पूर्वकं तुदादिगणस्य **षद्-लृ-विशरण- गत्यवसादनेषु**[1] धातोः क्विबन्तस्य रूपमिदमुपनिषदिति। यस्य व्युत्पत्तिलभ्योऽर्थो भवति- **उपनिषद्यते प्राप्यते ब्रह्मात्मभावोऽनया इत्युपनिषद्।** अर्थाद् गुरुं निकषा समुपगम्योपविश्य च प्राप्तं गुह्यात्मकं ब्रह्मविज्ञानमुपनिषदित्युच्यते। तेनाध्यात्मविद्यारहस्यप्रतिपादका वेदभागा उपनिषदः कथ्यन्ते। उपनिषदां कृते **ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत।।**[2] इति छान्दोग्ये, **य इमं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि। प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति**[3] कठोपनिषदि, क्वचिद् **रहस्यम्** इति चोक्तम्। अमरसिंहेन नानार्थवर्गे **धर्मे रहस्युपनिषत्स्यात्**[4] इत्युक्तम्। क्षीरस्वामिना कृतायां अमरकोषोद्घाटनटीकायां **उपनिषीदन्त्यस्यामुपनिषद्, वेदान्तोऽपि रहस्यत्वात्। तत्त्वेऽपि यथा- धर्मस्योपनिषत्परा** इत्युक्तम्।

विदन्त्येव भवन्तो यद्वेदानां मन्त्रब्राह्मणारण्यकोपनिषदिति चत्वारो विभागाः सन्ति। तेषु चतुर्ष्वपि विभागेषूपनिषदां वेदस्यान्तिमभागत्वेन प्रवचनादिमा वेदान्तनाम्ना प्रसिद्धाः सन्ति। उपनिषत्सु महर्षयः गूढतमानामाध्यात्मिकरहस्यानां विशदतया विचारं कृतवन्तः।

भारतीयदर्शनसाहित्ये त्रयः प्रस्थानग्रन्थाः सन्ति, ये वेदानवलम्बमाना मानवजीवनस्य चरमलक्ष्यप्राप्तिसाधनं ब्रह्मविज्ञानमुपदिशन्ति। तेषु त्रिष्वपि प्रस्थानग्रन्थेषूपनिषदः श्रेष्ठोपजीव्यग्रन्थत्वात् प्रथमप्रस्थानत्वेन गृह्यन्ते। श्रीमद्भगवद्गीता द्वितीयं प्रस्थानं ब्रह्मसूत्रञ्च तृतीयप्रस्थानमस्ति। उपनिषदामध्ययनेन दृष्टानुश्रविकविषयवितृष्णमुमुक्षूणां संसारस्य बीजभूता विद्या नश्यति, ब्रह्मप्राप्तं भवति, दुःखानि च क्षीणानि भवन्ति। अस्माकं प्राचीना महर्षयो यान्याध्यात्मिकतत्त्वानि ज्ञानदृशा साक्षादकुर्वस्तानि सर्वाण्यत्र वर्णितानि सन्ति।

उपनिषदां प्रधानत्वेन प्रतिपाद्यो विषयोऽस्त्यात्मा। तत्र ब्रह्म आत्मनो न भिन्नमिति प्रतिपादितमस्ति। आत्मैव सर्वव्यापी वर्त्तते। विश्वस्य सर्वेष्वपि पदार्थेषु स एव व्याप्तोऽस्ति। तस्मिन्नेव समग्रस्यापि प्रपञ्चस्य लयो भवति। ततो व्यतिरिक्तं न किमपि। अत एव बृहदारण्यकोपनिषद्याह- **स वायमात्मा**

---

* सहायक-आचार्यः, वेदविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

1. पा.धा.- भ्वादौ-854, तुदादौ- 1427
2. छान्दोग्योपनिषदि- 3/5/2
3. कठोपनिषदि- 1/3/17
4. अमरकोषे, नानार्थवर्गे- 93 तमे श्लोके।

**ब्रह्मविज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयः।**[1] एतेन स्फुटं भवति यत्संसारस्य यावन्तोऽपि स्थूलाः सूक्ष्मा वा पदार्थाः सन्ति ते सर्वेऽपि नात्मनो भिन्नाः। आत्मेनैव ते सर्वे वेदितव्याः, नात्मनः परं किमपि प्रियतरम्।

**ईशावास्योपनिषदो विषयवस्तु-** इदमपि भवन्तो जानन्त्येव यदीशावास्योपनिषच्छुक्ल-यजुर्वेदस्यान्तिमाध्यायरूपेण तिष्ठति। वैदिकसंहितायामियमेवोपनिषदुपलभ्यते। अन्यासूपनिषत्सु काश्चन उपनिषदो ब्राह्मणग्रन्थेष्वारण्यकग्रन्थेषु चोपलभ्यन्ते। वैदिकसंहितायामस्या उपनिषदो व्याख्यानत्वादियं सर्वप्राचीनेति मन्यते। **ईशावास्यमिदं सर्वमि**ति पदेनारभ्यमानत्वादस्या नाम **ईशावास्योपनिष**दित्यस्ति। अस्यामुपनिषदि अष्टादशमन्त्राः सन्ति। अत्र ज्ञानदृष्ट्या कर्मोपासनाया रहस्यं वर्णितमस्ति। उपनिषदियं कर्मसंन्यासस्य पक्षपातिनी न भूत्वा यावज्जीवनं निष्कामकर्मभावेन कर्मसम्पादनस्यानुरागिणी वर्त्तते। अत्राद्वैतभावनायाः स्पष्टं प्रतिपादनमस्ति। अत्र ब्रह्मणः स्वरूपवर्णनानन्तरं विद्या-अविद्या-सम्भूति-असम्भूत्यादीनां विवेचनमस्ति। अत्र ये मन्त्राः प्रोक्तास्सन्ति तेषामर्थं ज्ञातुमस्माभिर्बहुविधं यत्नं कर्त्तव्यं भवति। यतस्तु वेदमन्त्रेषु ये शब्दाः प्रयुक्तास्सन्ति ते पारिभाषिकाः विविधरहस्यसम्पृक्ताश्च सन्ति। तेषामनेकेऽर्थाः भवन्ति ब्राह्मणग्रन्थेषु **इदमध्यात्मम्, इदमधिभूतम्, इदमधियज्ञम्** इत्याद्युक्त्वा त्रिविधार्थप्रतिपादनसङ्केतः स्पष्टरूपेण प्रदत्तः।

अत इदं वक्तुं शक्यते यत्केवलं शब्दशास्त्राध्ययनेन पद-पदार्थज्ञानेनैव च वेदमन्त्राणां रहस्यात्मकार्थप्रतिपादनं नैव केनापि शक्यते कर्तुम्। यतस्तु वेदानां रहस्यमयोऽर्थः गुरुपरम्परायामेवास्ति सुरक्षितः। तदर्थमाप्तवाक्यं प्रमाणं यथा- **तद् गुरुमुखादेवावगन्तव्यम्, परिप्रश्नेन सेवया** इत्यादि। तात्पर्यमिदमस्ति यद्वेदमन्त्राणामुपनिषन्मन्त्राणाञ्च गूढार्थप्रतिपादनाय विविधशास्त्राणामाश्रयः स्वीकरणीयो भवति येनामृतात्मनः सम्यङ्निरूपणं भवितुमर्हति। एतदर्थमत्र पक्षत्रयं समाश्रित्याधिभूताधियज्ञाध्यात्म-रूपमर्थमुपस्थाप्यते। तत्राधिभूतोऽर्थः सामाजिकव्यवस्थानुकूलो मदीयत्वदीयात्मकः, अधियज्ञोऽर्थः सर्वस्वाहरणात्मिकीं प्रवृत्तिमवरुद्ध्य आवश्यकतानुसारमेव भौतिकपदार्थानामुपयोगः करणीयः येन संसारे सर्वत्र सन्तुलनं स्यात्, आध्यात्मिकोऽर्थश्च **सर्वे भवन्तु सुखिनः** तथा च **स्वस्मै स्वल्पं समाजाय सर्वस्वमि**त्युदारभावापन्नबुद्ध्या प्रस्तुतोऽस्ति। आदौ सामान्योऽर्थो दीयते तदनन्तरं त्रिविधानामर्थानां प्रकाशनं क्रियते। आशासे सुधयो मनीषिणश्च मदीयया प्रस्तुत्या सहमता भविष्यन्तीति।

**मन्त्रक्रमेणेशावास्योपनिषदो मन्त्रत्रयस्य विमर्शः**

प्रथमो मन्त्रः-

**ईशावास्यमिदꣳ सर्वं यत्किञ्च जगत्याञ्जगत्।**
**तेन त्यक्तेन भुञ्जीथा मागृधः कस्यस्विद्धनम्॥**[2]

1. बृहदारण्यकोपनिषदि- 4/4/5
2. शु.य.सं.- 40/1

**सामान्योऽर्थः**- चराचरात्मकेऽस्मिञ्जगति यत्किमपि वस्त्वस्ति तत्सर्वमीशसत्तयाऽऽक्रान्तमित्यवगन्तव्यम्। ईशेन त्यक्तेनैव पदार्थेन भोगः करणीयः। कस्याप्यन्यस्य वित्तस्येच्छां मा कुर्विति।

**अधिभूतोऽर्थः**- भौतिकपदार्थानामुत्पत्तिः पृथिव्याः सकाशात् स्वस्मै भवति। स्वयमुद्भूतस्य पदार्थस्य ईश्वरमपहाय न कश्चिदन्यो व्यक्तिविशेषो स्वामी भवितुमर्हति **तत्सृष्ट्वा तदेवानुप्राविशत्** जगन्निर्माय तत्र स्वयं प्रविश्य स्थित इति सिद्धान्तानुसारेण। स ईशः सर्वेषां प्राणिनां पितृस्थानीयोऽस्ति। पितुः सम्पत्तौ सर्वेषां पुत्राणामधिकारो मन्यते। तेनेदं फलितं भवति यज्जगति यावन्तोऽपि जीवास्सन्ति ते सर्वे तत्प्राप्तुमधिकृता भवन्ति। सर्ववस्तुषु परमेश्वरस्याधिकारम्मत्वा यदि सर्वमपि वस्तु सर्वेषां प्राणिनां मन्यते चेत्तदानीं समाजेष्वव्यवस्था सम्भविष्यति। अतोऽयमस्य स्वामीति निर्धारणमावश्यकम्भवति। वस्तुस्वामिन आदेशं विना न केनापि कस्यापि वस्तुनो ग्रहणं कर्त्तव्यमिति।

**अधियज्ञोऽर्थः**- जीवनं यज्ञः। **यज्-देवपूजासङ्गतिकरणदानेषु** इत्यनेन पाणिनीयसूत्रेण यज्ञशब्दार्थः प्रतिपादितः। दानपदमेवास्य मन्त्रस्याधियज्ञार्थप्रतिपादनाय मुख्यरूपेणावलम्बनमस्ति। अत्रेदमुच्यते यज्जगति दृश्यमानस्य सर्वस्यापि पदार्थस्याधिपतिः परमात्मैव। परमात्मना यद्दत्तं स्तोकं वा महद्वा साधनं तत्प्रदत्तेन साधनेन जीवनव्यवहारः परिपालनीयः। तेन यावन्ति साधनानि यस्मै प्रदत्तानि सन्ति तानि सर्वाण्यपि साधनान्यागते काले तत्तत्समक्षं स्वयमेवाविर्भवन्ति। ततोऽधिकस्य साधनस्य प्राप्तये कदापि वाञ्छा न करणीया। **तेन त्यक्तेन** इति पदेन परमात्मना प्रदत्तेन साधनेन जीवनयज्ञमनुष्ठातव्यमिति। न ततोऽधिकस्यान्यस्मै सुनिश्चितस्य साधनस्य कामना कर्त्तव्येति।

**आध्यात्मिकोऽर्थः**- **उच्छिष्टाज्जज्ञिरे सर्वम्**[1], **उच्छिष्टे लोक आहितः**[2] तथा च **इमे वै लोकाः प्रवर्ग्यः**[3] **अग्निवायुरादित्यस्तदेते प्रवर्ग्याः**[4] उपर्युक्तैरेतैः श्रौतवचनैरिदं स्पष्टं भवति यदिदं दृश्यमानं समस्तञ्जगत् तस्य परमात्मन उच्छिष्टमेवास्ति। यदुच्छिष्टं तदेव प्रवर्ग्य इत्यपि स्पष्ट एव। वेदेषु प्रवर्ग्यपदस्य महावीरो, घर्मः, शिरोयज्ञ इत्यादय अनेके पर्याया अप्युक्तास्सन्ति। अर्थाद्ब्रह्मणः प्रवर्ग्यभूता अग्निवाय्वादित्याः सर्वव्यापकाः सन्ति। तस्मादिमे संसारस्य स्वामिन उक्ताः। तदुक्तमपि मनुना-

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्॥**[5]

अत्राग्नेः सकाशादृग्वेदस्य, वायोस्सकाशाद्यजुर्वेदस्य, आदित्याच्च सामवेदस्य दोहनं विहितमस्ति। तत्रापि विशेषेण **ऋचं वाचं प्रपद्ये मनो यजुः सामप्राणं प्रपद्ये**[6] इत्यनेन वचनेन ऋचो वाङ्मयत्वम्,

1. अथर्ववेदे- 11/7/11, 23-27
2. अथर्ववेदे- 11/7/1
3. श.प.ब्रा- 14/3/2/23
4. श.प.ब्रा- 9/2/1/21
5. मनुस्मृतौ- 1/23
6. शु.य.सं.- 36/1

यजुषो मनोमयत्वम्, साम्नश्च प्राणमयत्वं प्रतिपादितमस्ति। अत इदं स्पष्टं यत्सर्वप्राणिषु वाग्रूपेणाग्निः, मनोभावेन वायुः, प्राणमयेन चादित्यो विद्यमानोऽस्ति। सर्वे ह्येते प्रवर्ग्या एव उक्तास्तस्मादिदं जगदुच्छिष्टं वर्तते।

अतोऽयमर्थः प्रस्फुटति यदस्मिन् संसारे यत्किमपि दृश्यमदृश्यं वा तत्त्वमस्ति तत्र सर्वत्र परमात्मनः स्वामित्वमस्ति। तेन त्यक्तेनार्थात्तदुच्छिष्टेन पदार्थेन भोगः करणीयः, कस्याप्यधिकृतस्य वस्तुनः प्राप्त्याकाङ्क्षा न विधातव्येति। तात्पर्यमिदमस्ति यद्वृक्षेषु यावत्फलं वृक्षसंलग्नं भवति तावदिदं ज्ञातव्यं यद्वृक्षस्य ममत्वं फलेन संयुक्तमस्ति। यदा प्रवर्ग्यरूपं फलं स्वस्मै वृक्षाच्च्युतं भवति तदेदं ज्ञातव्यं यदिदं फलं वृक्षेन त्यक्तमतोऽस्मिन् फले वृक्षस्य ममत्वन्नास्ति, एतत्फलं त्यागभावेन यथावश्यकमेव भोक्तव्यमिति।

द्वितीयो मन्त्रः-

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥**[1]

**सामान्योऽर्थः**- अस्मिन् संसारे कर्माणि कुर्वन्नेवायुषो शतवर्षपर्यन्तं जीवितुमभिलषेत्। एवमुक्तप्रकारेण यावज्जीवनं कर्ममार्गे प्रवृत्तेषु मनुष्येषु कर्मबन्धनस्य सम्भावना न भवति।

**अधिभूतोऽर्थः**- सर्वे मनुष्याः सर्वाण्यपि कर्माणि कर्तुं न समर्थाः भवन्ति। यतस्तु सर्वेषु पृथक्-पृथक् कर्मसम्पादनसामर्थ्यं भवति। यथा- वेदाध्ययनम्, अध्यापनम्, लेखनम्, प्रवचनम्, नृत्यम्, प्रबन्धनम्, हलकर्षणम्, वाणिज्यम्, स्वामिसेवा, याजमानमित्यादीन्यनेकानि कर्माणि करणीयानि भवन्ति। तत्सर्वमपि कार्यजातं केनापि स्वामिना सम्पादनीयं भवति। कर्मसम्पादयितुं सर्वेषां मनुष्याणां कृते तत्स्वामिना पृथक्-पृथक् कर्माणि निर्धारितानि भवन्ति। स्वामिना यत्कर्मकर्तुं ये मनुष्या नियुक्ता भवन्ति तानि कर्माणि तेषाम्मनुष्याणामधिकृतानि कर्माणि भवन्ति। ते सर्वेऽपि मनुष्याः स्वे स्वे कर्मण्यभिरतास्सन्तः समाजाय मङ्गलं कामयन्तः स्वामिना निर्दिष्टानि स्वाधिकृतकर्माण्याचरन्तः जीवनं यापयन्ति चेत्तर्हि तेन कर्मणा तेषामन्यथा अपकीर्त्यादयो न भवन्ति, न च तत्कर्म तेषां बन्धनायैव भवतीति।

**अधियज्ञोऽर्थः**- अग्निस्तपति, वायुः प्रवहति, जलं क्लेदयति च। तत्राग्नेरधिकृतं कर्म तापः, वायोः प्रवहणम्, जलस्य च क्लेदनमिति। नाग्निः प्रवहणे समर्थः, न वायुः क्लेदने, न चापस्तप्तुं समर्थः। यथाकालं यथोचितमात्रायां स्वकीयैरधिकृतकर्माणि कुर्वन्त्य एताः देवताः सृष्टेर्नियमाननुपालयन्ति तेन न कदाप्यपकीर्तिमुपगच्छन्त्युत प्रतिष्ठिता एव भवन्ति। अनेनेदं सुस्पष्टं भवति यद्यस्य यद्धि भवत्यधिकृतं कर्म तत्सम्पादनेनैव तस्य सामाजिकी प्रतिष्ठा समुपचीयते। अतो लोके मानवा अपि यस्मिन् कर्मणि स्वामिना नियुक्ताः स्युस्तानि कर्माण्याचरन्तः शतायुषं भुञ्जन्तो प्रतिष्ठामेवाप्नुवन्ति

1. शु.य.सं.- 40/2

नापकीर्तिमिति। तानि चाधिकृतानि कर्माणि तेषां बन्धायापि न भवति। अधिकृतान्येव कर्माणि स्वाभाविकान्युक्तानि यानि सहजानि भवन्ति। तदुक्तमपि भगवता श्रीकृष्णेन-

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्॥**

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥**[1]

अर्थात् सर्वेऽपि मानवाः सहजात्मकानि कर्माण्यनुतिष्ठन्तः स्वजीवनयज्ञं परिपालयन्त्वित्युपदेशः।

**आध्यात्मिकोऽर्थः**- ज्ञान-कर्म चोभे आत्मनः स्वाभाविकधर्मे विद्येते। विदितमेवास्ति यत्परमात्मनोऽर्द्धो भागः ज्ञानप्रधानः, अर्द्धभागश्च कर्मप्रधानोऽस्ति। ज्ञानसहकृतानि कर्माणि ज्ञानप्रधानानि निवृत्त्यात्मकानि, कर्मसहकृतानि कर्मप्रधानानि संस्कारजनितानि कर्माणि प्रवृत्त्यात्मकान्युक्तानि। ज्ञानप्रधानकर्मणि समस्तान्यपि प्रवृत्त्यात्मकानि कर्माणि विलीनानि भवन्ति। तदुक्तं गीतायाम्- **सर्वकर्माखिलं कर्म ज्ञाने परिसमाप्यते।**[2] इति कथनेनेदं स्पष्टं भवति यन्निवृत्तिकर्म वासनारहितं सहजमुत्थिताकाङ्क्षात्मकं स्वाभाविकमात्मीयञ्च भवति, तेन कर्मणा कर्मसन्तानः कर्मबन्धनञ्च नैवोत्पद्यते। प्रवृत्तिकर्म सकामं संस्कारजनकमुत्थाप्याकाङ्क्षात्मकम् अस्वाभाविकमनात्मीयञ्च भवति।

वस्तुतः कर्म कदापि बन्धनस्य कारणं न भवत्यपितु मनसः सकाशादुत्पन्नेच्छैव बन्धनकारणं भवति। तदुक्तमपि भगवता व्यासेन- **मन एव मनुष्याणां कारणं बन्धमोक्षयोः।**[3] निवृत्त्यात्मकं कर्म निष्काममिच्छाशून्यं भवति। अत्रासक्तेरभावो विद्यते, अत ईदृशानि कर्माणि कदापि बन्धनकारणानि न भवन्ति। यत्र निवृत्तिकर्म प्रज्ञानात्मकमस्ति तत्रैव प्रवृत्तिकर्म विज्ञानात्मकमिति। प्रज्ञानविज्ञानयोः प्रतिस्पर्द्धायां प्रज्ञानं विजितं विज्ञानञ्च पराभूतं भवति। यतस्तु प्रज्ञानप्रभवश्चन्द्रमा विद्यते, विज्ञानप्रभवश्च सूर्यः। सूर्यो भूपिण्डाद्बहुदूरे तिष्ठति, चन्द्रमा च भूपिण्डात्समीपवर्ति। तस्मात्कारणात् पार्थिवेषु मनुष्यादिषु जीवेषु सोमस्याधिक्यात् प्रज्ञानस्य सबलत्वं स्वतः सिद्धं भवति, विज्ञानस्य च निर्बलत्वमिति।

अतोऽस्मिन् तृतीयेऽर्थे 'कर्माणि' इति पदस्य कामना रहितानि, आत्मीयानि, स्वाभाविककर्माणि इत्यर्थः प्रस्फुटो भवति। 'अन्यथा' पदस्य कर्मसन्तान इति, लेपस्य चार्थो वासनासंस्कार इति स्वीक्रियते।

तात्पर्यमिदमस्ति यद्यावज्जीवनं निष्कामभावेन कर्माण्यनुष्ठेयानि, तानि च कर्माणि विद्यासापेक्षानि वा भवन्तु विद्यानिरपेक्षानि ईष्ट-आपूर्त्त-दत्तात्मकानि सत्कर्माणि वा। एतादृग्भिः कर्मभिर्न कर्मसन्तानो

1 श्रीमद्भगवद्गीता- 18/45, 47, 48
2 गीतायाम्-4/33
3 विष्णुपुराणे- 6/7/28

भविष्यति न च वासना लेप एव। अस्य फलं भविष्यति **विदेहमुक्ति**रिति। **न कर्म लिप्यते नरे** इत्युपनिषद्वाक्यस्य परिपोषणमपि तदैव भवितुमर्हतीति।

तृतीयो मन्त्रः-

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः।।**[1]

**सामान्योऽर्थः**- ये केऽपि जना आत्महत्यां कुर्वन्ति ते अस्माल्लोकात्प्रेत्य तल्लोकं प्रति गच्छन्ति यस्मिंल्लोके सूर्यस्य दर्शनं न भवति, तस्मिन् असूर्यलोके सूर्यस्याभावात् कदापि प्रकाशो न भवत्यतो तमसाच्छन्नो लोकः स उक्तः।

**अधिभूतोऽर्थः**- असूर्यम्पश्येत्यसूर्या, वयं जानीमो यत्पृथिवी सूर्यम्परितो भ्रमत्यहोरात्रयोरेकवारम्। अस्यां पृथिव्याञ्च दक्षिणोत्तरौ द्वौ गोलार्द्धौ विद्येते। तत्र यस्मिन्नक्षे पृथिवी सूर्यम्परिक्रामति तस्याक्षस्योत्तर-गोलार्द्धस्योपरितने भागे सूर्यस्य प्रकाशः सदैव भवति, परं दक्षिणगोलार्द्धस्याधस्तने भागे सूर्यस्य प्रकाशः कदापि न गच्छति। भौतिक्यां परिभाषायां तदेव स्थानमसूर्यपदेन व्यवहृतमस्ति, पातालमिति च पुराणेषु। येऽपि मनुष्याः स्वमात्मानं विनिहत्यास्माल्लोकात्प्रयन्ति ते तमासाच्छन्नं तमेव लोकम्प्रति गच्छन्ति स्वर्गं न प्राप्नुवन्तीत्यर्थः।

**अधियज्ञोऽर्थः**- जीवने प्रकाशस्य महत्त्वपूर्णं स्थानमस्ति। बृहदारण्यकोपनिषदि एकः प्रसङ्गो वर्णितोऽस्ति यदेकदा ब्रह्मविज्ञानवेत्ता जनको योगीश्वरं याावल्क्यमुपगत्यापृच्छत् यत्- **किं ज्योतिरयं पुरुषः?** तदानीं याज्ञवल्क्येनोत्तरं प्रदत्तम्- **सूर्यज्योतिश्चन्द्रज्योतिरग्निर्ज्योतिर्वाग्ज्योतिरात्मज्योतिरिति पञ्चज्योतिरयं पुरुष**[2] इति। एतेन स्पष्टं भवति यत्पञ्चज्योतिभिस्सम्पन्नो मनुष्यो सर्वविधं श्रौतं स्मार्तञ्च कर्म समनुष्ठाय महत्प्रकाशस्वरूपं स्वर्गरूपं फलं प्राप्नोति। स्वर्गप्राप्तिरेव मनुष्यस्य चरमं लक्ष्यमिति विदन्त्येव विद्वांसः। यज्ञेनात्मनः संस्कारो विधीयते, आत्मसंस्कारार्थमेव यजमानस्य दीक्षासंस्कारो विहितोऽस्ति। यो हि जनस्तादृशीनि कर्माण्याचरति स विष्णोः परमं पदमाप्नोति। विष्णोर्यत्परमं पदं तत्सदा प्रकाशमानं भवति सूर्येण सदा दृश्यमानत्वात्। तदुक्तमपि-**तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः दिवीव चक्षुराततम्।**[3] सूरय इति पदेनात्र सूर्यः, विद्वांसश्चेत्यर्थद्वयं संघटते। तात्पर्यमिदमस्ति यद्यत्र सदा प्रकाशो भवति तत्स्थानं विष्णोः परमं पदमित्युक्तम्। यज्ञादीनां फलमुक्तं वेदेषु- **ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि।।**[4] अर्थाद्यत्र बहुभिरुन्नतैः शृङ्गमयैः रश्मिभिरुपेतः सूर्यः सदा प्रकाशते

---

1. शु.य.सं.-40/3
2. बृहदारण्यकोपनिषदि-4/3/1-5
3. ऋग्वेदे- 1/22/20, सामवेदे- 1672, अथर्ववेदे- 7/26/7, शु.य.सं.- 6/5, तै.सं.- 1/3/6/2, 4/2/9/3
4. ऋग्वेदे- 1/154/6, शु.य.सं.- 6/3, तै.सं.- 1/3/6/1, निरुक्ते- 2/7

तद्बहुभिर्गीयमानस्य विष्णोः परमं पदमस्ति। तत्रावां पत्नीयजमानौ वासमिच्छावः। यो हि जनस्तत्स्थानमवाप्तये स्वात्मनः संस्कारं न विदधाति स एवात्रात्महन इत्युक्तः। यश्चात्महनः सः तत्स्थानं नाप्नोति, अर्थादस्माल्लोकात्प्रेत्य महदन्धेन तमसाच्छादितं सूर्यरहितं यदसूर्यलोकं तमुपगच्छतीति भावः।

अतस्सर्वेऽपि सामाजिकाः वेदोक्तानि कर्माण्याचरन्तः शतवर्षपर्यन्तं त्यागभावेनैहिकं भोगं भुञ्जन्तः जीवन्तु, येनासुर्यलोकगमनरूपादनिष्टात्स्वात्मानं गोपयितुं समर्था भविष्यन्तीति।

**आध्यात्मिकोऽर्थः- असुर्या नाम ते लोका** इति मन्त्रांशे असुर्यलोकपदस्य **प्राणो वाऽसुः**[1] इत्यनेन श्रौतवचनेन प्राणमयाः ये लोकास्ते असुर्या इत्यर्थः सङ्गच्छते। प्राणो हि द्विविधः सौर आप्यश्चेति। सौरप्राणस्याधिदेवता इन्द्र उक्तः, आप्यप्राणस्याधिदेवता च वरुण इति। इन्द्रवरुणयोर्मध्ये घोरविरोधो वर्तते तस्माल्लोकालोकरूपेषु वारुणमण्डलेषु सौरप्रकाशो न गच्छति। तेन **असुर्या** इति पदेन **सौरप्रकाशरहिताः** इत्यर्थोऽवगन्तव्यः।

**सूर्याद्भवन्ति भूतानि सूर्येण पालितानि तु।**
**सूर्ये लयं हि गच्छन्ति यः सूर्यः सोऽहमेव च।।**[2]

इति सूर्याथर्वशीर्षोक्तेन **सूर्य आत्मा जगतस्तस्थुषश्च**[3] इति वेदमन्त्रेण चेदं प्रमाणितं भवति यत्सूर्येणैव समस्तस्यास्य जगतः सृष्टिः सम्भवति। सेयं सृष्टिः सौरजीवभागसृष्टिः **ब्रह्मवनम्** इत्युच्यते। सृष्टिविषये वेदेषु एकः प्रश्नः समागच्छति यत्- **किंस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।**[4] इत्यस्योत्तरमपि ब्राह्मणग्रन्थेष्वेवं प्राप्यते- **ब्रह्मवनं ब्रह्म स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।**[5] अस्माकमृषिभिर्निरुपाधिब्रह्मत आरभ्य सोपाधिब्रह्मपर्यन्तस्य वर्णनं कृतम्। तेनेदं स्फुटं भवति यन्निरुपाधिके ब्रह्मण्यावरणस्य सर्वथाऽऽभावो भवति। सोपाधिके ब्रह्मणि वागावरणं क्रमशो विकासमाप्नोति। यथा पाञ्चभौतिकसृष्टौ सर्वादावात्मनः सकाशादाकाशस्योत्पत्तिरुक्तः। अत्रेदं ज्ञातव्यं यत्प्राणमनसी सूक्ष्मत्वादात्मन्यन्तर्भूते स्तः। वाक्तत्त्वञ्च स्थूलत्वाद्विश्वभावेन परिणमय्याकाशनाम्ना प्रसिद्धिमाप्नोति। वाग्बलमाकाशत्वेन प्रतिष्ठायान्येन बलेन संयुज्य वायुरूपेण परिणमति। तत्र बलरूपस्यावरणस्याधिक्यं भवति। यदा वायुर्बलसंसर्गात् स्थूलतामुपैति तदा तेजोरूपमादधाति। तेजोऽपि वाग्बलप्रभावात् क्रमशो स्थूलतामवाप्य अब्रूपेण, आपश्च पृथिवीत्वेन परिणमय्य पाञ्चभौतिकं विश्वं सृजति। वाक्तत्त्वस्येमामेव सर्वभूतव्य।पकतामभिलक्ष्य **वागेवेदं सर्वम्**[6] इत्युक्तं श्रुतौ।

---

1. श.प.ब्रा.- 6/6/2/6
2. सूर्याथर्वशीर्षे
3. ऋग्वेदे- 1/115/1
4. ऋग्वेदे- 10/31/7, शु.य.सं.- 17/20, तै.सं.- 4/6/2/5, तै.ब्रा.- 2/8/9/6
5. तै.ब्रा.-2/8/9/6
6. ऐ.आ.- 3/1/6

अनेनेदं सिद्धं भवति यदावरणस्योपचयेनास्य विश्वस्य निर्माणं भवति। सृष्टिक्रमानुसारं विश्वस्यान्तिममावरणमियं पृथिवीत्यस्ति। यथा प्राणमनसोरावरणविकासादाकाशात्पृथिवी सञ्जाता तथैव ब्रह्मरूपस्य आत्मन उत्तरोत्तरमावरणविकासाज्जीवात्मानो मनुष्यादयो विकसिता:। ते च मनुष्या: यादृशं कर्म कुर्वन्ति तादृशं फलमाप्नुवन्ति। वेदोक्तानि कर्माण्याचरन्तो बन्धनरहिता मुक्ताश्च भवन्ति, तद्भिन्नाचरणेन च तिर्यग्योनिषु गच्छन्ति। शरीरधारिजीवेषु मानुष्यमति दुर्लभमुक्तं तच्च पुण्यसञ्चयादेव कदाचिल्लभते। तदुक्तमपि- **कदाचिल्लभते जन्म मानुष्यं पुण्यसञ्चयात्।** तथा च **नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभे**ति। मानवेषु सौरप्राणस्याधिक्यं भवति तस्मादेव कारणात्तेषां शिर: उन्नतो भवति, पक्षीषु ततोऽप्यधिको भवत्यतस्त आकाशे उड्डयने समर्था: भवन्ति। अन्येषु जीवेषु यथा क्रमेण सौरप्राणस्याल्पता भवति तेनैव क्रमेण तेषां शिर: अधोऽधो निम्नतमा भवन्ति।

कथनस्य तात्पर्यमिदमस्ति यत् ये मानवा: कुत्सितकर्माचरणे प्रवृत्ता भवन्ति ते सामाजिक-व्यवस्थानुसारमपमानोपहासादिभिर्विविधैर्दण्डै: प्रतिपलमात्मघातं कुर्वन्ति। तादृशा एव जना अत्रात्महन इत्युक्ता:। ते चात्महनो जना अस्माल्लोकात्प्रेत्य आप्यप्राणमयेषु वारुणसमुद्रात्मकेष्वसुर्या नामसु लोकालोकेषु गच्छन्ति, निपतन्ति चेति।

**निष्कर्ष:**- निष्कर्षरूपेणायं वक्तुं शक्यते यदीशावास्योपनिषदि मानवजीवनसम्बद्धा विविधा विषया: रहस्यमयेन मन्त्रवाक्येनोपवर्णितास्सन्ति। येषां सम्यगध्ययनं विचारविमर्शश्चावश्यकोऽस्ति। यद्यपि साम्प्रतिके भौतिकवादियुगे आध्यात्मिकतथ्यविवेचनात्मकैरेतादृशैर्विचारैर्न कस्यापि कश्चित् सम्बन्धोऽस्ति। तथाप्याध्यात्मचिन्तनं विना मानवजीवनस्य साफल्यं न भवति। यतस्त्वात्मविज्ञानेन परमात्मविज्ञानस्यावबोध: सम्भवति। मानवशरीरे सत्यस्य परमात्मनो निवासो मन्यते। तदुक्तमपि ईशोपनिषदि- **हिरणमयेन पात्रेण सत्यस्यापिहितम्मुखम्। योऽसावादित्ये पुरुष: सोऽसावहम्।।** अर्थात् शरीरे विद्यमानस्य सत्यस्वरूपस्य परमात्मनो मुखं हिरणमयेन पात्रेण पिहितं वर्तते, यच्च मूर्धाभागे निहितमस्ति। अध्यात्मविज्ञानेन बारम्बारं ध्यानयोगाद्याचरणेन तत्पिहितम्मुखमुद्घाटयितुं शक्यते। वस्तुतो यस्य पुरुषस्योपस्थित्याऽयमादित्य: प्रकाशते स एव पुरुषोऽस्माकं शरीरेऽपि विद्यमानोऽस्ति। अत एवोच्यन्ते- **सर्वं खल्विदं ब्रह्म, तत्त्वमसि, अहं ब्रह्मास्मि** इत्यादीनि वाक्यानि। वेदेष्वपि- **एकं वा इदं विबभूव सर्वम्, पुरुष एव इदं सर्वम्, ईशावास्यमिदं सर्वम्,** इत्यादि।

ISSN - 0974-8946 शोधप्रभा
जुलाई-सितम्बर, 2017 वर्षः 42, तृतीयोऽङ्कः

# मैथ्यू-आर्नल्डनिरूपिताः साहित्यिकसमालोचनासिद्धान्ताः 1822-1885

डॉ. सुमनकुमारझा

इंग्लैण्डदेशीयो मैथ्यूआर्नल्डमहोदय एकोनविंशतिशताब्द्याः प्रमुखयथार्थवादिसमालोचकत्वेन परिगण्यते। पाश्चात्त्यसाहित्यसमीक्षकेषु मैथ्यूआर्नल्डमहोदयस्य स्थानमतिमहत्त्वपूर्णं वर्तते। यद्यपि जानड्राइडन एव आधुनिकाङ्ग्लसाहित्यसमालोचनाया जनकः कथ्यते परं वास्तविकरूपेणाधुनिकाङ्ग्लसमा-लोचनायाः प्रारम्भो मैथ्यूआर्नल्डमहोदयेन मन्यते। 1857 खिष्टाब्दे ऑक्सफोर्डविश्वविद्यालयेऽसौ ॲग्रेजीसाहित्यस्य आचार्यपदे नियुक्तोऽभूत् । यद्यपि तेन कश्चिदपि स्वतन्त्रो ग्रन्थो न लिखितः, तस्य साहित्यिकसमीक्षापरकविचाराः पत्र-पत्रिकासु निबन्धरूपेण भाषणरूपेण चोपलभ्यन्ते, तथापि पाश्चात्त्यसाहित्यिकसमालोचनायाः व्यवस्थितरूपप्रदानाय तस्य योगदानमैतिहासिकसन्दर्भेषु व्यावहारिकसन्दर्भेषु चातिशयं वर्तते।

प्रकृत्याऽसौ पूर्वमालोचकः पश्चाच्च कविरासीत्। अर्थात् मैथ्यूआर्नल्डः स्वभावेन कर्मणा च प्रथमत्वेन साहित्यसमीक्षकः तत्पश्चाच्च कविः। साहित्य-संस्कृत्योः सन्दर्भे तस्य विचारधारा भाववादिदर्शनेन प्रभाविता आसीत्। तन्मते साहित्यं जीवनादविच्छिन्नं भवति। अतः साहित्यस्य मूल्याङ्कनं जीवनसन्दर्भे एव भवेत्। जीवनादसम्बद्धं साहित्यं तत्सौन्दर्यञ्च व्यर्थं भवति। एवमेव तथाविधस्य साहित्यिकसौन्दर्यस्य मीमांसाऽपि आधारहीना निष्प्रयोजना च जायते। अत एव तेनोक्तम्- **जीवनस्य आलोचनाऽस्ति साहित्यम्।**[1]

तन्मते लोककल्याणमेव साहित्यस्य प्रयोजनं वर्तते। साहित्यस्य निकषो लोकमङ्गलं संस्कृतिसंवर्द्धनं जीवनस्य पूर्णत्वञ्च भवेत्। तन्मते काव्यप्रयोजनं नानन्दोऽपितु मानवस्याऽऽत्मविकासः समाजस्योत्थानं जीवनस्य पूर्णतायाः ज्ञानञ्च विद्यते। साहित्यस्य मूल्याङ्कनं सामाजिकप्रतिमानेषु नैतिकप्रतिमानेषु च भवेत् येन समाजस्य कीदृशं प्रतिमानमस्ति कीदृशञ्च आगामिनिकाले भवेत्तदपि मूल्याङ्कनेन समाजसमक्षमागमिष्यति। समाजो मानवजीवनञ्च कस्मिन्मार्गे प्रवहमाने स्तः, स मार्गः समीचीनोऽस्ति न वा, यदि समीचीनो नास्ति चेत्तत्र कीदृशं परिवर्तनं परिवर्द्धनञ्चापेक्ष्यते तदपि साहित्यसमालोचनाया अङ्गम्। तन्मतमासीत् यत् - कविमाहात्म्यमस्मिन् सन्दर्भे न भवति यत्तेन कलादृष्ट्या शास्त्रदृष्ट्या च कियन्महत्साहित्यं विरचितमपितु तस्य माहात्म्यं तदा भवति यदा तद्विरचितं साहित्यं युगस्य साहित्यिकं सामाजिकं बौद्धिकं नैतिकं सांस्कृतिकञ्च कर्त्तव्यं सम्पूरयति। अर्थात् साहित्यं युगानुकूलं युगस्यावश्यकतानुरूपञ्च भवेत् । तदैव तत् साहित्यं लोकोपयोगि लोकानुग्राहि च भवति।

---

* साहित्यविभागः, श्री.ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली-16

1. पाश्चात्यकाव्यशास्त्रसिद्धान्तः - पृ. 109

औद्योगिकक्रान्तिविज्ञानप्रभुत्वयोः परिणामस्वरूपं पाश्चात्त्यजगति मानवजीवने मानवीयमूल्येषु जीवनमान्यतासु च परिवर्तनस्य प्रक्रिया द्रुतगत्या प्रवहमानाऽऽसीत्। विज्ञानविकासस्य धर्म-काव्ययोरुपरि गम्भीरप्रभावो जातः। **टामसलवपीकाकनाम्ना** विचारकेन विज्ञान-काव्ययोः परस्परं सम्बन्धस्य प्रश्नमुत्थापयता स्वीये पुस्तके उद्घोषणेयं कृता यज्ज्ञानतर्कयोरस्मिन् युगे कवितायाः किमपि स्थानं नास्ति, काव्यं निष्प्रयोजनं वर्तते। तन्मते कविताया युगं व्यतीतम्। विज्ञानेन धर्म-संस्कृति-काव्येषु आघातः कृतः। पीकाकप्रभृतयो विचारकाः धर्म-संस्कृति-काव्यानामुच्छेदने प्रवृत्ता आसन्। यद्यपि शैलेप्रभृतिभिर्विचारकैः काव्यसंरक्षणस्य संवर्द्धनस्य च प्रयत्नो विहितः, परं विज्ञानप्रभावेण धर्म-संस्कृति-काव्यानां परंपरीणाधाराः प्रायशो विनष्टमाना आसन्। तदानीन्तने समाजे नवीनानां मानवीयमूल्यानां, तेषां नवीनस्रोतसाञ्च महती आवश्यकता आसीत् यानि मूल्यानि शाश्वतानि भवेयुः। कालेऽस्मिन् मैथ्यूआर्नल्डस्याविर्भावो जातः। असौ स्व-प्रतिभया विचारेण चिन्तनेन च पाश्चात्त्यजगति साहित्यस्य वैशिष्ट्यं महत्त्वञ्च पुनः स्थापितवान्। तेनोद्घुष्टं यत्काव्यमेव मानवसंस्कृत्याः मानवीयमूल्यानाञ्चाक्षयो निधिर्वर्तते। मानवजीवने पूर्णताऽपि साहित्येनैव भवितुं शक्यते। साहित्यं विना मानवजीवनमपूर्णं वर्तते। मानवजीवनस्य परिष्कारः संस्कारश्च साहित्येनैव कर्तुं शक्यते। अत एव जीवनस्याऽऽलोचनाऽस्ति साहित्यमित्युक्त्वा तेनोत्तरवर्तिभ्यः समालोचकेभ्यः समीक्षाया नूतनैका सरणिः प्रदत्ता।

**साहित्यं नाम जीवनस्याऽऽलोचना**-(Poetry is at bottom a criticism of life).

जीवनस्य विश्लेषणाय अथ च मानवेभ्यो जीवनाधारप्रदानाय काव्यमेव समर्थं साधनमस्ति भविष्यति चेति आर्नल्डमहोदयस्य मतम्। साहित्यं विना विज्ञानमप्यपूर्णं सिद्धं भविष्यतीत्यपि तस्योद्घोषः। धर्मदर्शनयोर्विकल्पमपि साहित्यमेव भवितुं शक्यते। इत्थमार्नल्डमहोदयेन साहित्यस्य व्यापकत्वमानन्त्यं वैलक्षण्यञ्च प्रतिपादितम्। प्रदर्शितश्च साहित्य-मानवजीवनयोः सहसम्बन्धः, अपि च मानवस्य भाव-कल्पना-बुद्धि-क्रियातत्त्वानां नियमने काव्यस्य भूमिकाऽपि तेन निर्धारिता वर्णिता च। अनेन साकमेव तेन धर्मविज्ञानयोः सीमाऽपि निर्धारिता। तन्मते साहित्यस्य स्थानं कदापि धर्मदर्शनैर्न नेतुं शक्यते। मानवजीवने साहित्यस्य सर्वदा सर्वथा चाक्षुण्णं स्थानमस्ति स्थास्यति च।

**आलोचकः संस्कृत्या उन्नायकः**- मानवीयमूल्यानामक्षयो निधिरस्ति साहित्यमिति स्वीकुर्वता आर्नल्डमहोदयस्य विचारो वर्तते यत्सत्यविचाराणां समाजे धाराप्रवाहनं समीक्षकस्य सामाजिकदायित्वमिति। तन्मते समीक्षकाः समालोचकाः साहित्याश्रितायाः संस्कृत्या उन्नायकाः भवन्ति। पूर्णतायाः द्वितीयं नाम संस्कृतिरेव, काव्यञ्च संस्कृत्या अन्यतमं साधनं वर्तते। माधुर्याऽऽलोकौ संस्कृत्याः विशिष्टगुणौ स्तः। मानवमात्रं प्रति प्रेमभावस्य विकासो मानवस्य सर्वविधमुन्नयनञ्च संस्कृत्या अङ्गं विद्यते। जीवने उदात्तस्यान्वेषणं सर्वोत्तमविचारस्य प्रतिपादनं, जीवनादर्शस्य जीवननिकषस्य च स्थापनं संस्कृत्याः लक्ष्यम्। जीवने साध्यसाधनयोः पूर्णापूर्णयोर्व्याख्या निर्धारणञ्च संस्कृत्या मुख्यं प्रयोजनं भवति।

**कल्चर एण्ड एनार्की** नाम्नि स्वीये शोधनिबन्धे तेन धारणेयं विवेचिता अथ च स्वच्छन्दतावादस्य धारणा निराकृता।

मैथ्यूआर्नल्डमहोदयः प्राचीनाधुनिकपरम्परयोः सङ्गमस्थाने उपस्थितः सन् एकं नवीनं समीक्षादर्शनं नवीनामेकां समालोचनापद्धतिञ्च विकसितवान्। या समीक्षापद्धतिः साहित्यस्य मूल्याङ्कनाय साहित्यसर्जनाय च विशिष्टा सञ्जाता, स्वीकृता चोतरवर्तिभिः साहित्यसमीक्षकैः चिन्तकैश्च। तन्मते काव्यं केवलमानन्दमनोरञ्जनयोः साधनं नापितु सांस्कृतिकोन्नयनस्य व्यक्तित्वपरिष्करणस्यापि साधनं वर्तते।

तदानीन्तनसमाजसन्दर्भे तस्य धारणाऽऽसीत् यदभिजातवर्गोऽसभ्यो जातः, मध्यवर्गो भोगे लीनो विद्यते निम्नवर्गश्चाधुना सुप्तावस्थायां दृश्यते। एतेषु प्रथमान्तिमौ वर्गौ सांस्कृतिकोन्नयनदृष्ट्या निरर्थकावास्ताम्। मध्यवर्गादेव आशां कर्तुं शक्यते, परं मध्यवर्गः औद्योगिकक्रान्त्या समुपलब्धानां सुखसाधनानामुपभोगे लिप्त आसीत्। अतः सदालोचनायाः सदालोचकस्य च प्रमुखं कर्त्तव्यं भवेत् मध्यवर्गस्य रुचिपरिष्कारः समुत्थानञ्चेति आर्नल्डमहोदयस्याह्वानमासीत्।

**संस्कृतिः समीक्षा च**- संस्कृतिः समीक्षा च परस्परमभिन्ने स्त इति आर्नल्डमहोदयस्य स्थापना वर्तते। तन्मते समीक्षया सत्यविचाराणां स्वच्छविचाराणाञ्च धारा प्रवहते, अपि च विश्वे ये केऽपि श्रेष्ठविचाराः सन्ति तेषां विचाराणां प्रसारः प्रचारः ज्ञानञ्च समीक्षया सम्पाद्यते। संस्कृत्याः समालोचनायाश्च लक्ष्यं विद्यते पूर्णता। पूर्णतायाः साध्यं वर्तते जिज्ञासा, पूर्णतायाः धर्मोऽस्ति निसङ्गता। तन्मते मानवानां सांस्कृतिकपूर्णत्वं सांस्कृतिकोन्नयनञ्च समीक्षाया उद्देश्यमस्ति। इत्थमालोचकस्य कर्तव्यमस्ति संस्कृत्या उन्नयनम्। एतदर्थम् आलोचकस्य हृदये लोकमङ्गलं प्रति नैतिकोत्साहः सामाजिकोत्साहश्चापेक्षितौ स्तः। मानवमात्रस्य सांस्कृतिकोन्नयनं पूर्णत्वञ्च आलोचकस्य लक्ष्यं भवेत् न तु स्वार्थचिन्तनं स्वार्थसिद्धिश्च। स्वार्थचिन्तने निरताः समालोचकाः क्षुद्राः भवन्तीति तेषां विचारः काव्यालोचनायामसौ दार्शनिकताया अतिशयं निवारयति, यतोऽनेनातिशयेन आलोचना अमूर्ता सञ्जायते अथ चाऽऽलोचनाया यदुद्देश्यं वर्तते- मानवजीवनस्य हितचिन्तनं समुन्नयनं सार्थकं फलप्रदञ्च जीवनं तत्रापि साफल्यं न प्राप्यते।

**वास्तविक-समालोचना**- आर्नल्डमते आलोचना ऐतिहासिक-नैज-वास्तविकभेदेन त्रिधा भवति। तासु वास्तविकी आलोचनैव काम्याऽस्ति। तन्मते ऐतिहासिकनैजे आलोचने चाऽऽलोचना इति नैव कथयितुं शक्येते। यतः ऐतिहासिकाऽऽलोचनायां प्रवृत्तीनामाधारे साहित्यस्य विकासक्रमस्य परिचयमुपस्थापयति साहित्येतिहासञ्च प्रदर्शयति, परं समीक्षा रचनायाः गुणदोषान् विवेचयति, तत्र तु इतिहासो भवत्येव न। एवमेव स्वकीय-रुचि-प्रवृत्ति-राग-द्वेषादिवशात् नैजसमीक्षयाऽपि काव्यस्य शुद्धं सार्थकञ्च मूल्याङ्कनं नास्ति सम्भवम्। अत एव वास्तविकी आलोचनैव समालोचकाय श्रेयस्करी वर्तते। वास्तविकालोचनया आर्नल्डमहोदयस्य तात्पर्यमस्ति नैतिकतायाः नियमैर्नियन्त्रिता आलोचना, यस्यां निम्नलिखितगुणा भवन्ति-

1- तत्र काव्यसत्य-काव्यसौन्दर्ययोर्निर्धारितनियमान्तर्गतं जीवनस्य समालोचना भवति।

2- तत्र स्वार्थपरता नैव दृश्यतेऽपितु सर्वजनहिताय सर्वजनसुखाय चेत्यस्याकाङ्क्षा बलवती भवति।

3- जगत्यस्मिन् समुपलभ्यमानस्य सर्वोत्तमज्ञानस्य प्रकाशने सा आलोचना समर्था भवति। अपि च तेन ज्ञानेन नवीनविचाराणां सृजने प्रसारे च सक्षमा भवति वास्तविकाऽऽलोचना।

**तुलनात्मिका आलोचना**- तुलनात्मिकाया आलोचनायाः प्रवर्तकः कथ्यते आर्नल्डमहोदयम्। तस्य महत्ता एतदर्थं विद्यते यत्तेन सर्वप्रथमं व्यावहारिकालोचनाया नियमा निरूपिताः। तदानीम् ऑग्ल-समालोचना स्वीयां प्रादेशिकसङ्कीर्णतायां पृथक्तावादिसङ्कीर्णतायाञ्च बद्धाऽऽसीत्। फ्रांस-जर्मनदेशौ अस्यां दिशि अग्रगामिनौ आस्ताम्। अतः तेन क्षेत्रीय-राष्ट्रियसीम्नोऽतिक्रम्य सम्पूर्णस्य विश्वस्य चिन्तनमननयोः प्रस्तावः क्रियते। तेन इंग्लैण्डदेशस्याभिजात्यवर्गमसभ्यमुक्त्वा प्राचीनयूनानरोमदेशयोः समकालिक-फ्रांस-जर्मनदेशयोश्च विचारधाराणामनिवार्याध्ययनेन अस्यां स्थितौ परिवर्तनमपेक्ष्यते, परिष्कारश्चापेक्ष्यते। इत्थं तेन तुलनात्मिका आलोचनापद्धतिः प्रवर्तिता।

**मूल्याङ्कनस्य निकषः पद्धतिश्च**- आर्नल्डमते आलोचकः कस्या अपि रचनायाः ऐतिहासिकं नैजञ्च मूल्याङ्कनं न कृत्वा वास्तविकं मूल्याङ्कनं कुर्यात्। एतत्तदैव सम्भवमस्ति यदा आलोचकेषु श्रेष्ठकृतीनामवबोधनसामर्थ्यं स्यात्, श्रेष्ठकृतीनामानन्दानुभूतेः सामर्थ्यं स्यादपि च साधारण-मिथ्या-संदिग्ध-रचनाभ्यः श्रेष्ठसाहित्यस्याभिजात्यसाहित्यस्य च तारतम्यविवेको भवेत्। तेनाभिजात्यसाहित्यं प्रत्यक्षतः त्रिधा मन्यते- 1 संदिग्धसाहित्यम् 2 मिथ्या-साहित्यम् 3 वास्तविकसाहित्यञ्चेति। तत्र यत्साहित्यमिदानीं श्रेष्ठवर्गे नागतं परमागमनस्य संभावना वर्तते तत् सन्दिग्धश्रेण्यामागच्छति। यत्र बाह्यं चाकचिक्यं तु भवति परमान्तरिकगाम्भीर्यस्याभावो भवति तदस्ति मिथ्यासाहित्यम्। यदानन्दानुभूतिप्रदाने मानवीयमूल्यप्रदाने च समर्थं भवति तदस्ति वास्तविकं साहित्यम्।

श्रेष्ठसाहित्यस्य प्रत्यभिज्ञानाय परीक्षणाय च तेन निकषपद्धतिः प्रवर्तिता। सन्दर्भेऽस्मिन् तेन निर्दिष्टम् -- आलोचकस्य स्मृतौ महतां लेखकानां, श्रेष्ठकवीनां पद्यानि कथनानि मार्मिका उक्तयश्च भवेयुः, येन कस्यापि नवीनरचनायाः परीक्षणकाले प्रत्यभिज्ञानकाले मूल्याङ्कनसमये च ता उक्तयः, तानि कथनानि निकषमिव प्रयोक्तुं शक्यन्ते।

**The study of poetry**, 'द स्टडी ऑफ पोयट्री' इत्यस्मिन् निबन्धे तेन होमर-दॉते-शेक्सपीयर-मिल्टनप्रभृतीनां कवीनां कानिचन कथनानि उपस्थापितानि, काश्चित् कविताश्च निकषपद्धत्याः निदर्शनरूपेणोद्धृताः। अस्यां पद्धतौ गुणा अपि सन्ति, कामपि सीमानं पर्यन्तं सार्थकताऽपि वर्तते, परं समग्रतो विचारोऽयं रूढिवादिनां शास्त्रानुयायिनां मतमिव विद्यते। तदनुसारं प्राचीनसाहित्यमेव महान्तं स्वीकृत्य दृष्टान्तरूपेण तदेव प्रयुक्तव्यं तत्प्रति आलोचनात्मिका दृष्टिः नैवाङ्गीकर्तव्या इति।

अनेन प्राचीनं प्रत्यन्धभक्तिर्नवीनं प्रत्युपेक्षाभावोऽपि परिलक्ष्यते। व्यावहारिकदृष्ट्या आर्नल्डप्रवर्तितेयं निकषपद्धतिरतीव सार्थकपद्धतिरस्तीति नैव कथयितुं शक्यते।

**काव्यसत्यं काव्यसौन्दर्यञ्च**- काव्यं जीवनस्य आलोचनाऽस्तीति आर्नल्डमहोदयस्य सर्वाधिका महत्त्वपूर्णा स्थापना वर्तते। कवेर्महत्ता तथ्येऽस्मिन् निहिताऽस्ति यदसौ कियच्छक्त्या सह कियत्सौन्दर्येण साकं विचाराणां जीवनेन सह विनियोगं करोति, जीवनेन सह सम्बन्धं स्थापयति च। तस्मिन् सम्बन्धे कथं जीवेत् जीवनमित्यस्य प्रश्नस्याप्युत्तरं भवेत्। तन्मते काव्यस्य मुख्यं लक्ष्यं सत्यस्योद्घाटनं सौन्दर्यस्य चित्रणञ्च। यस्मिन् काव्ये काव्यसत्यं काव्यसौन्दर्यञ्च न वर्तेते तत्र नास्ति काव्यत्वम्। काव्यसत्येन तस्याभिप्रायोऽस्ति विषयवस्तुनो मूल्यवत्ता। तदनुसारं काव्यरचनायां कथावस्तु सर्वप्रधानतत्त्वमस्ति। अतः तस्य चयनं कविभिः सूक्ष्मचिन्तनेन सावधानेन च कर्तव्यम्। तत्र कार्यव्यापारोऽपि श्रेष्ठो भवेत्। यतः कार्यव्यापारेणैव कथावस्तुनः सार्थकता लाकोपयोगिता च निर्णीयते।

आर्नल्डमते तानि कार्याणि श्रेष्ठानि सन्ति यानि मानवीयमूल्यैः मानवानामुदात्तरागैः संवेदनाभिश्च सम्बद्धानि भवन्ति। ता मूलभूतभावनाः, या मानवेषु स्थायिरूपेणावस्थिताः सन्ति याश्च कालनिरपेक्षाः भवन्ति, तासां निरूपणमपि तत्र भवेत्। काव्यसौन्दर्येण तस्य तात्पर्यमभिव्यञ्जनायाः लालित्येन चारुत्वेन आकर्षणेन चास्ति। जीवनस्य व्याख्यायाः तात्पर्यं जीवनस्योदात्तेन सह पुनर्निर्माणमस्ति। एतादृशं काव्यमेव आनन्दप्रदातृ भवितुं शक्यते।

आर्नल्डमहोदयस्य लक्ष्यमासीत् कलावाद-स्वच्छन्दतावादप्रभृतिविचारधाराणां खण्डनं विधाय मानवजीवनेन सह काव्यस्य सम्बन्धस्थापनम्। यतः कलावाद- स्वच्छन्दतावादप्रभृतिविचारधारायां निजानुभूतीनामभिव्यक्तये महत्त्वं प्रदाय काव्येषु जीवनस्य चित्रणमुपेक्षते स्म। वस्तुत आर्नल्डमहोदयस्य प्रतिपादनमिदमासीत् यत्काव्येषु जीवनस्य निरूपणं विश्लेषणं व्याख्यानञ्च भवेत्, जीवनात् निरपेक्षं काव्यं वस्तुतोऽकाव्यमेव।

**कविः आलोचकश्च-**

आर्नल्डमहोदयेन कविः कविकर्म च आलोचकात् आलोचनातश्च श्रेष्ठतरं मन्यते। श्रेष्ठसाहित्यसर्जने कविप्रतिभाया युगधर्मस्य रचनाकालस्य च समन्वितः प्रयासोऽनिवार्यो भवति। इत्थं सर्जनात्मिका प्रतिभाऽपि श्रेष्ठसाहित्यसर्जनाय समुचितं सर्जनकालमपेक्षते। आलोचकस्येदं कर्तव्यं भवति यदसौ सर्जनप्रतिभायाः सर्जनकालस्य च परस्परं सम्बन्धं जानीयात्। कविं तस्य कविताञ्चावबोद्धुम् आलोचकेन कवेः परिवेशोऽपि सम्यक्रूपेण ज्ञातव्यः। रचनायाः कालखण्डोऽपि नूनमेव परिशीलनीयः, नो चेत् युगधर्मस्य ज्ञानं न भविष्यति। कविव्यक्तित्वं कविरचनायामभिव्यज्यते। कवेः व्यक्तित्वनिर्माणे तस्य जन्म-परिवेश-परिवार-मित्रवर्ग-जीवनसम्बद्धघटना- शिक्षा-दीक्षा-सफलता-विफलता-विचार-विमर्शादीनामन्यतमं महत्त्वं भवति। अतः कस्यापि रचनाया मूल्याङ्कने रचयितुर्युग-युगबोध-परिवेश-जीवन-शिक्षा-संघर्षप्रभृतीनां सम्यक्परिचय आलोचकेन प्राप्तव्यः।

यद्यपि समीक्षाजगति एकस्मिन् समीक्षकवर्गे इयं धारणा बलवती विद्यते यत् काव्यकृतेः मूल्याङ्कनं कृतिमात्रस्याधारे भवेत्, कृतिकारस्य व्यक्तित्त्वमथवाऽन्य- बाह्यतत्त्वानामाधारे मूल्याङ्कनं न भवेत्। मतस्यास्य आंशिकोपयोगिताऽवश्यं स्वीकर्तव्या परमेतस्यानिवार्यत्वस्वीकरणे प्रायशो मूल्याङ्कनमपूर्णं भविष्यति।

**आलोचक आलोचना च-**

मैथ्यू-आर्नल्डमहोदयेन आलोचक-समाजयोः, आलोचक-रचनयोः परस्परं सम्बन्धविषये बहुमहत्त्वपूर्णो विचारः प्रस्तुतः। तस्य विचारेण इंग्लैण्डदेशस्य साहित्यं बहुकालं यावत् प्रभावितमासीत्। तेन समीक्षाकार्यं सर्जनात्मकशक्तेः कार्यं मन्यते। समीक्षां विना उत्कृष्टकृतेर्निर्माणं नैव भवितुं शक्यते। समीक्षयैव युगबोधो जायते, अर्थात् युगबोधाय समीक्षाशक्तिरावश्यकी विद्यते। साहित्यसर्जनाय समीक्षणाय च जीवन-जगतोर्विशदरूपेण ज्ञानमनिवार्यं वर्तते। आलोचकस्य समाजं प्रति किं कर्त्तव्यमस्ति, आलोचकस्य के-के गुणा भवेयुः, श्रेष्ठकृतीनां चयनस्य के आधाराः सन्ति, एतत्सर्वं तेन सविस्तरेण निरूपितम्। तन्मते आलोचकस्य कर्त्तव्यमस्ति यदसौ जगतः सर्वोत्तमं ज्ञानं, सर्वोत्तमं विचारञ्च जानीयात्, तयोः ज्ञान-विचारयोः चिन्तनं कुर्यात्, पुनः तयोः सर्वत्र प्रचारं प्रसारञ्च कुर्यात्, येन सद्विचाराणां सम्यक्भावनानां नवीनभावनानाञ्च धारा समाजे प्रवहेत्। अनया रीत्यैवासौ साहित्यस्य सम्बन्धः संस्कृत्या सह योजयितुं शक्नोति।

**तन्मते आलोचके त्रयो गुणा भवेयुः-**

1) आलोचकः सर्वप्रथमं पठेत्, पठनादनन्तरमवबोधः कुर्यात्, अवबोधना- दनन्तरं वस्तूनां पदार्थानाञ्च यथार्थरूपं पश्येत्। **(See things as they realy are)**

2) यत्किमपि तेनाधिगतं तदन्येभ्यः प्रत्यावर्तनं कर्तव्यम्, येन उत्तमभावनानां सर्वोत्तमविचाराणां सर्वत्र प्रामुख्यं भवेत्, तेन समाजे जगति च परिवर्तनं भवेत्। कार्यमिदं सोत्साहेन सम्पादनीयमालोचकेन, यथा धर्मप्रचारको धर्मप्रचारस्य कार्यमुत्साहपूर्वकं करोति।

3) रचनात्मकप्रतिभायै उपयुक्तपरिवेशनिर्माणमपि आलोचकस्य कार्यमस्ति। अर्थात् रचनात्मकप्रतिभायै उर्वरकभूमिनिर्माणं समीक्षकैः करणीयं, फलतोऽनुकूलावसरेऽनुकूलसमये सति साहित्यकारः सर्जनात्मकं साहित्यसर्जनं कुर्यात्।

**The element with which the creative power works are Ideas, the best ideas on every matter which literature touches, current at the time,** अर्थात् सर्जनात्मकं साहित्यं येषु तत्त्वेष्वाश्रितं भवति तानि सन्ति विचारतत्त्वानि, तद्विचाराः स्वकीयस्य कालस्य सर्वश्रेष्ठविचाराः भवन्ति। विचारानेतान् आलोचक एव कविभ्यः समुपस्थापयति प्रददाति च। कवेः कार्यं तु केवलमालोचकेन प्रतिपादितानां गवेषितानाञ्च विचाराणां सश्लेषणं करणीयमस्ति। मतमिदं

सर्वथा समीचीनं प्रतिभाति यत् महान् आलोचकः प्रतिभावान् समीक्षकः साहित्यसर्जनाय ऊर्वरां भूमिं निर्माति, कार्यमिदमसौ विचाराणामनुसंधानेन सम्पादयति। महान् आलोचकः सर्वश्रेष्ठविचाराणां प्रचारणं करोति, जीवने तेषां विचाराणां रूपान्तरणाय प्रयतते। सर्वान् विचारान् ज्ञानञ्च सर्वत्र सम्प्रेषयति। विचाराणां वैशिष्ट्यं विचारेषु निहितयोर्माधुर्याऽऽलोकयोः कारणं भवति। वस्तुतः आर्नल्डमहोदय आलोचकायाधिकं श्रेयं प्रदत्तवान्। परं तन्मते महाकवीनां महत्त्वं सर्वाधिकं भवति यतः ते श्रेष्ठसाहित्यं रचयन्ति। **Study of poetry**, मध्ये तेन आलोचकाय निर्देशः प्रदत्तः। यथा- **Critics give themselves great labour to draw out what in. In the abstract constitutes the characterestics of a high quality of poetry. it is much better simply to have recourse to concrete examples- to take specimens of poetry of the high, the very highest quality, and to say, the characters of a high quality of poetry are what is expressed there.**

**कला नीतिश्च**- पुरा धर्मेण मानवकल्याणायाधिकमुपयोगिकार्यं कृतं परमधुना धर्मः केवलं धार्मिकसंस्कृतिः संस्थासु एव दृश्यते। सम्प्रति तदेव कार्यं संस्कृतिः करिष्यति, अर्थात् संस्कृतिः मानवस्यान्तरिकं जीवनमतिमधुरं स्वच्छपूर्णमालोकपूर्णञ्च करिष्यति । यतः संस्कृतिः कविता चाऽभिन्ने स्तः, अतः कार्यमिदं काव्यं करिष्यतीति आर्नल्डमहोदयस्य विचारः।

तन्मते कवितायै नैतिकता अनिवार्याऽस्ति। परं नैतिकशब्दो व्यापकार्थे ग्रहणीयः। 'कथं निवसेत्' प्रश्नस्यान्तर्गते यत्किमपि समाविष्टुं शक्यते, तत्सर्वं 'नैतिकं' वर्तते इति तस्य विचारः। काव्येषु नैतिकसिद्धान्तानां प्रस्तुतीकरणस्याऽयमर्थो नास्ति यत् कवयः नैतिककृतीनामुपदेशपरक-कृतीनाञ्चनिर्माणं कुर्वन्तु, अपितु तस्यार्थोऽयमस्ति यत्कवयो मानवजीवनाय विचाराणामुदात्तं व्यापकञ्च प्रस्तुतीकरणं कुर्युः। नीत्या धर्मोपदेश प्रदानं नास्त्यभिमतम् आर्नल्डमहोदयस्यापितु आन्तरिकस्वतन्त्रता विश्रान्ति आनन्दः सन्तुष्टिश्च विद्यते, एवमेव कलापरकतत्त्वानि नास्ति साध्यमस्माकमपितु साधनं वर्तते इति तस्योद्घोषः।

उत्तमसाहित्यम्- **A great human action of a thousand years ego is more intresting to it than a smaller human action of today.**

आर्नल्डमहोदयस्य मते नवीनैः कविभिः यूनानदेशस्य प्राचीनानां कवीनामनुकरणं करणीयम्। प्राचीनसाहित्यस्य त्रिधा वैशिष्ट्यं विद्यते- महत्कृत्यमाश्रितं काव्यस्य विषयचयनम्, विषयस्य स्पष्टं प्रणयनम्, अभिव्यञ्जनायै न्यूनं महत्त्वप्रदानञ्चेति।

तन्मते उत्तमसाहित्यसर्जनायापि इदमावश्यकं यत्कविः महतः कृत्यस्य चयनं कुर्यात्, तस्य प्रस्तुतीकरणमपि उपयुक्तशैल्या भवेत्, येन सा रचना आनन्दप्रदातृ स्यात्। काव्यशैलीसन्दर्भे तस्य विचारोऽस्ति यत्तत्र शुद्धता स्पष्टता रागात्मकता च भवेयुः। अर्थगाम्भीर्यमसौ महन्महत्त्वं प्रददाति। तन्मते गद्यपद्ययोः रचनाशैली भिन्ना भवति। अतो द्वयोः रचनाशैली-भाषयोरन्तरं स्वाभाविकमेव।

तेनोक्तम्- **Prose can not have the power of verse**. अर्थात् गद्ये पद्यवत् शक्तिर्नैवाऽऽगन्तुं शक्यते। यतः कवितानिर्माणमात्मनि भवति परं गद्यं मस्तिष्कादुद्भूयते। अर्थात् पद्ये हृदयपक्षस्य प्राधान्यं भवति तु गद्ये मस्तिष्कपक्षस्य। अरस्तूमिव आर्नल्डमहोदयेनापि कार्य कथानकञ्च सर्वाधिकं महत्वं प्रदीयते। आर्नल्डयुगे नैके जनाः चिन्तयन्ति स्म (तेषां विचारः आसीत्) यत् कवितायां विषयस्य महत्त्वं नापितु विषयप्रतिपादनस्य महत्त्वं भवति। कविशक्तिरेव सर्वतोभावेन विशिष्टाऽस्ति। कविना च स्व- प्रतिपादनकौशलेन कश्चिद्निकृष्टकार्यव्यापारोऽपि उत्कृष्टकार्यव्यापारमिव आनन्दप्रदायकः कर्तुं शक्यते। मतमिदं नाङ्गीकरोति आर्नल्डमहोदयः।

यथा च तेनोक्तं- **No, assuredly, it is not, it never can be so.** तन्मते तु सर्वाधिकं महत्वं कार्यस्य कृत्यस्य, तस्य चयनस्य निर्माणस्य च भवति। सर्वं विषयाश्रितमस्ति। महतः कृत्यस्य चयनं भवेत्, तस्य कृत्यस्य स्थितीनां मूले निहितभावनया तादात्म्यं स्थापयेत्, यदीदमभूत् तदा सर्वं स्वत एव भविष्यति। परं सर्वोत्कृष्टाः कार्यव्यापाराः के भवन्ति? सन्दर्भेऽस्मिन् कथयत्यसौ- 'नूनमेव ते सन्त्युत्कृष्टकार्यव्यापाराः ये मानवस्य सहजसंस्कारान् सर्वाधिकमुद्वेलयन्ति, स्थायिभावानुद्वेलयन्ति, ये जनमानसे स्थायिरूपेण तिष्ठन्ति, अपि च ये कालनिरपेक्षाः भवन्ति। तन्मते उत्कृष्टरचनायां कवेरन्तरात्मनः स्वरो वस्तुनो गाम्भीर्यञ्चानिवार्यं तत्त्वमस्ति। काव्यं सत्यं शिवं सुन्दरञ्चानिवार्यरूपेण भवेदिति तस्य विचारः।

सारतः तेन काव्यं महतः कार्यस्य प्रतिपादनं मन्यते। परमानन्दप्रदानमेव काव्यस्योद्देश्यं स्वीक्रियते तेन। उत्तमकाव्याय तेन महता कृत्येन साकमुत्कृष्टा शैलीऽपि आवश्यकी मन्यते। काव्यात्मकता उच्चादर्शः सरसता सिद्धिश्च उत्कृष्टताया मानदण्डो निर्दिष्टः तेन। सरलोत्कृष्टशैल्या उदाहरणं होमरविरचितं काव्यमस्ति तु सिद्धोत्कृष्टशैल्या उदाहरणं मिल्टनविरचिता कविता विद्यते। तन्मते उत्कृष्टा शैली काव्यांशेषु नापितु समग्रकाव्यविधाने प्रयुक्ता स्यात्। अर्थादसौ सम्पूर्णकाव्ये उत्कृष्टशैल्याः प्रयोगमिच्छति न तु कश्मिश्चिदंशे। अर्थात् संपूर्णं काव्यं स्मृद्धं वैभवयुक्तं स्यान्न तु कश्चिदंशो बिम्बविधानेन स्मृद्धः स्यात्।

**यथा चोक्तं तेन- We here poems which seem to exist merely for the sake of single lines and passages, not for the sake of producing any total impression . We have critics who seem to direct their attention merely to detached expressions, to the language about the action, not to the action itself.**

इत्थमार्नल्डमहोदयेन उत्तमकवितायै महता कार्येण सह समुत्कृष्टा शैलीऽपि अनिवार्या मन्यते। वस्तुनो रूपस्य च समन्वयोऽभीष्टो भवति उत्तमकाव्याय । विगते काले तस्य धारणायां विचारेषु च परिवर्तनं दृश्यते । परिवर्तनमिदं तस्य विचारेषु प्रगतेः परिवर्तनस्य च सूचकमस्ति न त्वन्तर्विरोधस्य। परवर्तिकाले आर्नल्डमहोदयस्य साहित्यसमीक्षासिद्धान्तसन्दर्भे पाश्चात्यालोचकेषु मतवैभिन्न्यं वादविवादञ्च प्रसृतमासीत्। तथापि एतत्तु निर्विवादरूपेण वक्तुं शक्यते यत्तेन पाश्चात्यसमालोचनाया

नवीनं दर्शनं नवीना समीक्षापद्धतिश्च प्रवर्तिता। इति।

**निष्कर्षः**- एकोनविंशतिशताब्द्या उत्तरार्धे विंशतिशताब्द्याः प्रारम्भे च आर्नल्डमहोदयप्रतिपादितस्य साहित्यिकसमालोचनासिद्धान्तस्य पाश्चात्त्यसमीक्षाजगति, विशेषतः इंग्लैण्डदेशेऽन्यतमः प्रभावो दृश्यते। वस्तुतः आधुनिकॉग्लाऽऽलोचनायाः प्रवर्तको मन्यते आर्नल्डमहोदयः। तन्निरूपितानां प्रमुखानां स्थापनानां सारो निम्नलिखितरूपेण प्रस्तोतुं शक्यते-

1. मानवतावादिषु चिन्तकेष्वग्रगण्योऽस्ति मैथ्यूआर्नल्डः। मानवसंस्कृतेः मानवीयमूल्यानाञ्चाक्षयो निधिरस्ति काव्यमिति तस्योद्घोषः। असौ काव्यं मानवीयमूल्यप्राप्तेः साधनं स्वीकरोति। औद्योगीकरण-विज्ञानविकासयोश्च परिणामेन धर्म-संस्कृति-साहित्येषु जायमानस्याघातस्य निवारणाय तेन महान् प्रयत्नः कृतः।

2. तेन मानवस्य भाव-कल्पना-बुद्धि-क्रियातत्त्वानां सम्वर्द्धने साहित्यस्य भूमिकां निरूप्य, जीवनस्यालोचनाऽस्ति काव्यमिति उद्घुष्यते।

3. तन्मते पूर्णताया अध्ययनमस्ति संस्कृतिः, काव्यञ्च संस्कृतेरन्यतमं साधनं विद्यते। इत्थं समीक्षकः संस्कृत्या उन्नायको भवति। समीक्षकस्य कर्त्तव्यं भवति समाजे मानवेषु च सत्यविचाराणां सदाचाराणां धारा-प्रवाहनम्। प्राचीनार्वाचीनपरम्परयोः सामञ्जस्य स्थापनाय तेन दृढमेकं समीक्षादर्शनं प्रतिपादितमाविर्भूता च नवीना साहित्यसमीक्षापद्धतिः।

4. तेन समीक्षकेषु लोकमङ्गलं प्रति नैतिकसामाजिकोत्साहयोर्भाव आवश्यको मन्यते। तन्मते स्वार्थेषु संलिप्ता आलोचकाः क्षुद्रबुद्धयो भवन्ति। तेन आलोचनायां दार्शनिकताया अतिशयः प्रयोगो निषिध्यते, यतोऽनेन आलोचनाऽमूर्ता सञ्जायते। अमूर्ता चाऽऽलोचना स्वोद्देश्यपूर्तये विफलायते।

5. तन्मते वास्तविकी आलोचनैव श्रेयस्करी भवति। वास्तविकालोचनया तस्य तात्पर्यं विद्यतेनैतिकतायार्नियमैर्नियन्त्रिता संवलिता संपृक्ता चाऽऽलोचना, यत्र जीवनस्यऽऽलोचना भवेत्।

6. तेन तुलनात्मकमालोचनं प्रवर्तितम्।

7. तन्मते श्रेष्ठसर्जनात्मिका प्रतिभाऽपि श्रेष्ठसाहित्यसर्जनाय समुचितं सर्जनकालमपेक्षते। अतः समीक्षकस्येदं कर्त्तव्यं यदसौ सर्जनप्रतिभासर्जनकालयोः परस्परं सम्बन्धं ज्ञायेत्।

8. तन्मते काव्यसत्य-काव्यसौन्दर्ययोः प्रस्थापना काव्यस्य मुख्यं लक्ष्यं भवेत्। काव्यसत्येन तस्य तात्पर्यं वर्ततेविषयवस्तुनः मूल्यवत्ता श्रेष्ठता च। काव्यसौन्दर्येण तस्य तात्पर्यमस्ति- अभिव्यञ्जनायाः लालित्यं चारुत्वमाकर्षणञ्च। तस्य निर्भ्रान्तधारणा वर्तते यत्काव्येषु जीवननिरूपणं नूनमेव भवेत्, जीवनस्य व्याख्याऽपि भवेत्। जीवननिरपेक्षकाव्यं वस्तुतः काव्यमेव नास्ति। आर्नल्डमहोदय एकोनविंशतिशताब्द्याः अरस्तू अपि कथ्यते।

सहायकग्रन्थसूची-

1. Western litrary Criticism- From plato to present by A Habib.
2. The use of poetry and the use of criticism—By T.S. Eliot, Faber and Faber—3 Queen square, London.
3. Coleridge and Abhinavgupta – Dr Shrikrishna mishra.
4. पाश्चात्यकाव्यशास्त्र के सिद्धान्त डॉ.शान्तिस्वरूपगुप्त, प्रकाशक:, अशोकप्रकाशन, दिल्ली-6 ।
5. पाश्चात्यकाव्यशास्त्र के सिद्धान्त-डॉ. मैथिलीप्रसादभारद्वाज, हरियाणा साहित्य अकादमी चण्डीगढ।
6. भारतीय एवं पाश्चात्यकाव्यशास्त्र- डॉ.बच्चन सिंह, हरियाणा साहित्य अकादमी, चण्डीगढ ।
7. पाश्चात्यकाव्यशास्त्र की परम्परा - डॉ. नगेन्द्र ।
8. पाश्चात्यकाव्यशास्त्र- डॉ. भगीरथ मिश्र ।
9. पाश्चात्यकाव्यशास्त्र -प्रो. देवेन्द्रनाथ शर्मा ।
10. पाश्चात्यकाव्यशास्त्र- डॉ. कृष्णदेव शर्मा, विनोदपुस्तकमन्दिर, आगरा ।

ISSN - 0974-8946 शोधप्रभा
जुलाई–सितम्बर, 2017 वर्षः 42, तृतीयोऽङ्कः

# सर्वदर्शने शोधप्रविधेः तत्त्वानि

डॉ. सच्चिदानन्दस्नेही

येनेरिताः प्रवर्तन्ते प्राणिनः स्वेषु कर्मसु।
तं वन्दे परमात्मानं स्वात्मानं सर्वदेहिनाम्॥
यस्य पादांशुसम्भूतं विश्वं भाति चराचरम्।
पूर्णानन्दं गुरुं वन्दे तं पूर्णानन्दविग्रहम्॥[1]

इदानीं शोधप्रविधेः परिचर्चा सर्वत्र विश्वविद्यालयेषु महाविद्यालयेषु शिक्षासंस्थानेषु च परिदृश्यते ? एतत् विषये जिज्ञासा अपि जायते यत् शोधस्य प्रयोजनं किमस्ति? शोधाय विषयस्य चयनं कथं भवेत्? किं नाम शोधकार्यम्? का शोधप्रविधिः? शोधसंक्षिप्तिकायाः निर्माणं कथं करणीयम्? शोधसंक्षिप्तिकायां केषां विषायाणां ग्रहणं भवेत्? शोधप्रारूपः कथं भवेत्? शोधप्रबन्धो कथं लेखनीयः? शोधप्रबन्धस्य भाषा कीदृशी भवेत्? तत्र दोषाणां परिहारो कथं भवेत्? कानि च शोधप्रविधेः तत्त्वानि? शोधसारः कथं लेखनीयः? संस्कृतवाङ्मये शोधप्रवृत्तयः कानि सन्ति? इत्यादयः।

संस्कृतवाङ्मये वेदोपनिषत्साहित्यव्याकरणपुराणदर्शनायुर्वेदादिशास्त्रेषु वा शोधप्रविधेः नानाविधानि तत्त्वानि सन्ति। तत्रापि मुख्यतः भारतीयदर्शने सर्वदर्शने वा शोधप्रविधेः सर्वाधिकानि तत्त्वानि सन्ति येषां अनुवृत्ति अन्येषु शास्त्रेषु अपि परिदृश्यन्ते। इदानीं पुनः जिज्ञासा जायते यत् किं नाम सर्वदर्शनम् अथवा सर्वदर्शने कानि दर्शनानि सन्ति? सर्वदर्शने शोधप्रविधेः कानि तत्त्वानि सन्ति? दर्शनानां सम्यक् अनुशीलनेन ज्ञायते यत् शोधप्रविधेः तत्त्वानि तेषां दर्शनानां तत्त्वमीमांसायां, प्रमाणमीमांसायां, ज्ञानमीमांसायां, नीतिमीमांसायाञ्च सन्निहितानि सन्ति।

**भारतीयदर्शनं द्विधा विभज्यते। 1.आस्तिकं वैदिकं वा 2.नास्तिकं अवैदिकं वा ।** तत्रापि पारम्परिकरूपेण नव दर्शनानां प्रचलनं सम्प्रति दरीदृश्यन्ते। भारते नास्तिकास्तिकभेदेन परस्परं भेदापन्नानि सन्त्यपि तानि दर्शनानि सन्ति नवविधानीति। तेषु न्यायवैशेषिकसांख्ययोगपूर्वमीमांसोत्तरमीमांसेति षड् आस्तिकदर्शनानि सन्ति। तथा च चार्वाकजैनबौद्धाश्चेति (वैभाषिकमाध्यमिकयोगाचारसौत्रन्तिकाश्च) त्रीणि नास्तिकदर्शनानि सन्ति। **'नास्तिको वेदनिन्दकः'**[2] इति वचनात् नास्तिकपदेन वेदविरोधित्वं गृह्यते। तथा च वेदसमर्थकानि दर्शनानि आस्तिकपदेनोच्यते। वस्तुतः सम्पूर्णमपि भारतीयदर्शनं वेदेषु

---

* सहायकाचार्यः, सर्वदर्शनविभागः, ज.ना.ब्र.आदर्शसंस्कृतमहाविद्यालयः, लगमा, रामभद्रपुर दरभङ्गा, बिहार–847407

1. केनोपनिषदतः, ईशादि नौ उपनिषद्, शाङ्करभाष्यार्थहिन्दीव्याख्योपेता, गीताप्रेसगोरखपुरतः।

2. मनुस्मृति 2.11

(उपनिषत्सु) एवान्तर्भूतमस्ति। वेदविरोधिचार्वाकजैनबौद्धदर्शनेष्वपि वैदिकतत्त्वानामेव प्रत्यक्षाप्रत्यक्षरूपेण प्रभावो परिदृश्यते। माधवाचार्यप्रणीते सर्वदर्शनसङ्ग्रहे षोड्शदर्शनानि प्रतिपादितानि। तानि सन्ति-1. चार्वाकस्य लोकायतदर्शनं, 2. तथागतस्य बौद्धदर्शनं 3. आर्हतस्य जैनदर्शनं 4. अक्षपादस्य न्यायदर्शनं, 5.औलूक्यस्य वैशेषिकदर्शनं, 6. कपिलस्य सांख्यदर्शनं 7. पालञ्जलयोगदर्शनं, 8. जैमिनीय-मीमांसादर्शनं, 9. शाङ्करवेदान्तदर्शनं 10. रामानुजस्य विशिष्टाद्वैत-वेदान्तदर्शनं, 11. पूर्णप्रज्ञस्य द्वैतवेदान्तदर्शनं 12. नकुलीशपाशुपतदर्शनं 13. शैवदर्शनं 14. प्रत्यभिज्ञादर्शनं काश्मीरी शैव-दर्शनं वा 15. रसेश्वरदर्शनम् आयुर्वेददर्शनं वा 16. व्याकरणदर्शनञ्च। विविधेषु शास्त्रेषु शोधप्रविधेः यानि तत्त्वानि सन्ति तानि सर्वाणि तत्त्वानि अत्र संक्षेपेण भाष्यन्ते।

संक्षिप्त-संभाव्य-सरलशोधविषयान् चयनाय पूर्ववर्तीनां शोधकार्याणामवलोकनं प्रथमं भवेत्। विषयविशेषज्ञस्य मार्गनिर्देशकस्य परामर्शेण विषयस्य चयनं भवेत्। विषयस्य चयनानन्तरं शोधप्रविधिविषयकपरिचयात्मकग्रन्थानामध्ययनं प्रशिक्षणञ्च भवेत्। अस्मिन् विषये शास्त्रस्य निर्देशो वर्तते यत् -'**विमर्श्य कार्यताम्**'। तत् कथं भवेत्? समाधत्ते-विषयस्यारम्भे अनुबन्धचतुष्ट्यं प्रतिपाद्येत्। चित्तशोधविषयस्य अनुबन्धचतुष्ट्यात्मकं परीक्षणमपि करणीयम्? परीक्षणाय प्रश्नाः जिज्ञासितव्याः? तत्र प्रथमः प्रश्नः भवेत्- 1. किं शोधकार्यमिदं मम विषयसम्बन्धितमस्ति न वा? द्वितीयः प्रश्नः भवेत् -चित्ते विषयस्य प्रतिपाद्य-प्रतिपादकभावसम्बन्धो अस्ति न वा? तृतीयः प्रश्नः भवेत्- किं शोधकार्यमिदं मम सामर्थ्यात् अधिकं तु नास्ति अथवा नियतकालावधौ शोधपरिपूर्णाय मम सामर्थ्यमस्ति न वा ? चतुर्थः प्रश्नः भवेत्- शोधकार्यस्यास्य प्रयोजनं किम्? एतेषां प्रश्नानां समाधानं यदि सिद्धं भवति तर्हि चित्ते विषये प्रवृत्तिः भवेदन्यथान्यस्य विषयस्य चयनं करणीयम्।

तदनन्तरं शास्त्रनिर्देशः वर्तते - '**समाप्तिकामो मङ्गलमाचरेत्**'। मङ्गलाचरणस्यानन्तरं शोधस्य प्रारूपसम्पादनाय शोधसंक्षिप्तिकायाः निर्माणं करणीयम्। शोधसंक्षिप्तिकायामपि अनुबन्धचतुष्टयः परिपालनं भवेत्। शोधसंक्षिप्तिका कथं भवेत्? समाधत्ते-'**सूत्रवत् भवेत्**'। तेन सूत्रलक्षणरूपेणोप-दिष्टेनान्वेषिततत्त्वानां परिपालनं यथाभवेत्? सूत्रलक्षणन्तु -

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**
**अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥**[1]

1. **अल्पाक्षरम्**-प्रकल्पितस्य शोधविषयस्य शोधप्रारूपो संक्षेपेण वस्तुनिर्देशात्मकाध्यायविभाजनसहितं भवेत्।
2. **असन्दिग्धं**-प्रकल्पिते शोधप्रारूपे सन्देहरहितमवधारणात्मकं ज्ञानं प्रतिपादनीयम्।
3. **सारवत्**- प्रकल्पितस्य शोधविषयस्य सारं शोधसंक्षिप्तिकायां प्रतिपादनीयम्। कृतस्य शोधस्य सारांशः शोधप्रबन्धे प्रतिपादनीयः।

1. व्याकरणसिद्धान्तकौमुदी, भट्टोजीदीक्षितप्रणीतं, हि. व्या. गोपालदत्तपाण्डेय चौ. सं. भवन वाराणसीतः प्रकाशितम्।

4. **विश्वतोमुखम्**- शोधसंक्षिप्तिकायाः विषयः सर्वतो ग्राह्यभाषायां सुस्पष्टञ्च भवेत्।

5. **अस्तोभम्**- शोधसंक्षिप्तिकाः व्यक्तिगतरागद्वेषपूर्वाग्रहातिशयोक्त्यादिदोषरहिताः भवेत्।

6. **अनवद्यञ्च**-शोधसंक्षिप्तिकायां आरोपप्रत्यारोपव्यक्तिगतमहत्वाकाङ्क्षादीनां प्रदर्शनं न भवेत्।

**ननु अध्यायेषु विषयस्य प्रतिपादनं कथं भवेत्? अथवा प्रकल्पित- शोधप्रबन्धस्य अध्यायेषु प्रवृत्तिर्कथं भवेत् ?** समाधत्ते-**'स्वशास्त्ररीत्या भवेत्'**। पुनः जिज्ञासा भवति-**अस्य कोऽभिप्रायः? यथोक्तं न्यायभाष्ये**-''त्रिविधाः चाऽस्य शास्त्रस्य प्रवृत्तिः- उद्देशो लक्षणं परीक्षाश्चेति। तत्र नामधेयेन पदार्थमात्रस्याभिधान- मुद्देशः। तत्रोद्दिष्टस्य तत्त्वव्यवच्छेदको धर्मो लक्षणम्। लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा।''[1] एवमेव समानभावः तर्कभाषायामप्युक्तम्[2]। तस्येप्सा जिहासा प्रयुक्तस्य समीहा नाम प्रवृत्तिरित्युच्यते। पुनः जिज्ञासा भवति यत्- कः प्रमाता? किं नाम प्रमाणम्? किम् नाम प्रमेयम्? का प्रमा? अतः तेषां क्रमेण समाधानं प्रस्तूयते-

१. **प्रमाता**-यस्येप्सा जिहासा अर्थ प्रति प्रवृत्तिश्च स प्रमाता। (A researcher or The person who wants valid Knowledge)

२. **प्रमाणं**- स येनार्थं प्रमिणोति तत्प्रमाणम्। (Means of valid knowledge)

३. **प्रमेयः**-योऽर्थ प्रमीयते तत्प्रमेयम्। (The Object to be proven or The problem to be solved )

४. **प्रमितिः**-यदर्थविज्ञानं सा प्रमितिः। (True or valid Knowledge produced from means of valid knowledge.)

अनुमानप्रमाणप्रसङ्गे परार्थानुमाने शास्त्रस्य प्रवृत्तिः पञ्चावयवात्मकं भवति। प्रतिज्ञा-हेतु-उदाहरण-उपनय-निगमनानि इति पञ्चावयवाः सन्ति। तत्र साध्यनिर्देशः प्रतिज्ञा[3]। प्रसिद्धसाधर्म्यात् साध्यसाधनं हेतुः[4]। तथा वैधर्म्यात्[5]। साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरण्[6]। तद्विपर्ययाद्वा विपरीतम्[7]। उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः[8]। हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्[9]।

1. न्यायदर्शनं वात्स्यायनसूत्रभाष्यसहितं, न्यायसूत्रभाष्य 1.1.3., चौ0 सं0 भवन वाराणसीतः, सप्तम् संस्करणम्, वि. सं0 2071
2. तर्कभाषा, केशवमिश्रप्रणीता, ''त्रिविधा चाऽस्य शास्त्रस्य प्रवृत्तिः-उद्देशो लक्षणं परीक्षाश्चेति। उद्देशस्तुाममात्रेण वस्तुसंकीर्तनम्। लक्षणं त्वसाधारण धर्मवचनम्। लक्षितस्येदं लक्षणमुत्पद्यते न वेति विचारः परीक्षा।''
3. न्यायसूत्रम् 1.1.33.,
4. न्यायसूत्रम् 1.1.34.,
5. न्यायसूत्रम् 1.1.35
6. न्यायसूत्रम् 1.1.36.
7. न्यायसूत्रम् 1.1.37.
8. न्यायसूत्रम् 1.1.38.
9. न्यायसूत्रम् 1.1.39

एवमेव मीमांसादर्शनेऽपि व्याख्यानस्य अधिकरणात्मकं पञ्चावयवात्मकं प्रवृत्तिः दृश्यते। यथोक्तं-

**विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।**
**सङ्गतिश्चेति पञ्चाङ्गं शास्त्रे अधिकरणं विदुः।।**[1]

सुप्रसिद्धे श्लोके मीमांसादर्शनशास्त्रीयग्रन्थानां प्रवृत्तिरप्युक्ताः-

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।**

१. **उपक्रमः** - प्रस्तावना समस्यात्मकप्रश्नस्योपस्थापनं वा। (Introducing the problem).

२. **उपसंहारः** - प्राक्कल्पना परिकल्पना वा। (The Hypothesis)

३. **अभ्यासः** - प्रकल्पितस्य विषयस्य सामान्यस्वरूपः प्रारूपो वा। (General Outline in support of the Hypothesis)

४. **अपूर्वता** - मौलिकतायाः सङ्केतः। (Indication of Originality)

५. **फलम्** - अनिर्धारिततत्त्वस्य निर्धारणम् । (The result Orientedness of the problem)

६. **अर्थवादः** - स्तुतिनिन्दान्यतरबोधकं वाक्यम्। (Argument in support of the solution or Observation and refutation of other's view if any.)

७. **उपपत्ती** - निष्कर्षः। (Establishing the truth)

व्याकरणशास्त्रे रूपसिद्धीणां त्रिविधं प्रतिपादनं प्रसिद्धम्। तच्च 1. सूत्रेण 2. भाष्येण 3. वार्तिकेन च। तथा च व्याकरणशास्त्रे व्याख्यानं षड्विधं स्मर्यते । यथा प्रतिपादितं तैः -

**पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।**
**आक्षेपोऽथ समाधानं षड्विधं व्याख्यानं स्मृतम्।।**[2]

भाष्यलक्षणम् -

**सूत्रार्थो वर्ण्यते यत्र वर्णैः सूत्रानुसारभिः।**
**स्वपदानि च वर्ण्यते भाष्यं भाष्यविदो विदुः।।**[3]

---

1. मीमांसाश्लोकवार्तिकम्, कुमारिलभट्टप्रणीतम् ,चौ. सं. भवन वाराणसीतः प्रकाष्ठितम्।
2. व्याकरणसिद्धान्तकौमुदी, भट्टोजीदीक्षितप्रणीतं, हि. व्या. गोपालदत्तपाण्डेय, चौ0 सं0 भवन वाराणसीतः प्रकाशितम्।
3. ''व्याकरणसिद्धान्तकौमुदी'', भट्टोजीदीक्षितप्रणीतं, हि0 व्या0 गोपालदत्तपाण्डेय, चौ0 सुरभारतीवाराणसीतः प्रकाशितम्, सं0 2001, पृ0 सं0 891।

वार्तिकलक्षणं च-

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**
**तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा विचक्षणाः।।**[1]

साहित्यशास्त्रे काव्यशास्त्रे वा भावः, अन्वयः, छन्दः, अलंकारञ्च योजयित्वा श्लोकानां व्याख्या क्रियते। अन्यत् सर्व व्युत्पत्तिनिवर्चनं पदच्छेदसविग्रहपदार्थोक्तिस्तु व्याकरणरीत्या एव भवति। वस्तुतः साहित्यं भावप्रधानं, व्याकरणे सिद्धिः प्रधाना, दर्शनेषु तत्त्वं प्रधानं भवति। एतेषां शास्त्राणां व्याख्यानमपि यथाशास्त्रं भवति। अत उक्तम्- **'विस्तरस्तु यथाशास्त्रं दर्शितम्'।** अन्येषु शास्त्रेषु अपि नानाविध- व्याख्यानं दर्शितम्। तस्य किं प्रयोजनमिति?

एतेषु सर्वेषु दर्शनेषु शास्त्रस्य व्याख्याने विभिन्नानि व्याख्यानसाधनानि अपि उक्तानि। व्याख्यानसाधनानि एव तन्त्रयुक्तय अपि कथ्यन्ते। तत्र शास्त्रेषु 'तन्त्रयुक्तिषु' अनेकानि शोधप्रविधेः तत्त्वानि प्रतिपादितानि। यद्यपि विभिन्नेषु ग्रन्थेषु तेषां संख्याविषये मतभेद वर्तते परञ्च भावस्तु समान एवास्ति। चरकसंहितायां सुश्रुतमते वा त्रिंशत् (30) तन्त्रयुक्तयः सन्ति। ते सन्ति-**"1.अधिकरणं, 2.योगः, 3.पदार्थः, 4.हेत्वर्थः, 5.उद्देशः, 6.उपदेशः, 7.अपदेशः, 8.अपवर्जः, 9.वाक्यशेषः, 10.अर्थापत्तिः, 11.विपर्ययः, 12.प्रसङ्गः, 13.एकान्तः, 14.अनैकान्तः, 15.पूर्वपक्षः, 16. निर्णयः, 17.अनुमतम्, 18.विधानम्, 19.अनागतावेक्षणम्, 20.21.अतिक्रान्तावेक्षणम्, 22. संशयः, 23.व्याख्यानम्, 24.स्वसंज्ञा, 25.निवर्चनम्, 26.निदर्शनम्, 27.नियोगः, 28.विकल्पः, 29.समुच्चयः, 30.ऊह्यम्"**[2]

लेले महोदयेन स्वकीयग्रन्थे[3] आंग्लभाषायां 39 तन्त्रयुक्तिनां व्याख्यानं कृतम्। ते सन्ति-

**"1.अतिक्रान्तावेक्षणं (Reference to previous Investigations) 2.अतिदेशः (Reference to inter-related topics) 3.अधिकरणम् (Topic under discussion) 4. अनागतवेक्षणम् (Reference to posterior fact) 5.अनुमतः (Approval of the views of others) 6. अपदेशः (To advance a reason) 7.अपवादः (Exception to a general principal) 8.अर्थापत्तिः (To presume the occurrence) 9. उत्तरपक्षः (Answer and Establishing the point) 10. उद्देशः (Brief Introduction) 11.उद्धारः समाधानं वा (Extrication) 12. उपदेशः (Authoriative Instruction) 13.उपमानं (Analogical intelligibility) 14. ऊहः (Deductive reasoning) 15. एकान्तः (Universal Principal) 16. दृष्टान्तः (Exemplification) 17.निदर्शना (illustrative explanation) 18.नियोगः**

1. तत्रैव।
2. सु0 सं0 सू0 6.4
3. *The Doctrine of the Tantrayuktis*, By Lele W.K., Chowkhamba Surabharati Prakashan, Varanasi, 1981.

